नृणां सुलभो विवेकः । सद्देवधर्म्मगुरुतत्त्वविवेचने तु, केपाञ्चिदेव मतिरुल्लसितं तनोति ॥ ८ ॥ विधीयमानं गुणवज्जनार्चनं, पुंसामसीमास्तनुते सुसम्पदः । गुणाश्च सम्पूर्णतया जिनं विना, न स्युस्ततोऽर्च्यो भविकैर्जिनेश्वरः ॥ ९ ॥ यज्जन्मावसरे देवा, देव्योऽनाकारिता अपि । आगत्य सर्वे कुर्वन्ति, प्रौढोत्सवपरम्पराः ॥ १० ॥ ज्ञानदर्शनचारित्र-प्रमुखा सद्गुणावली । विलक्षणाऽन्यदेवेभ्यो, येषां जागर्त्त्यऽनुत्तरा ॥ ११ ॥ तथाहि—

छत्रत्रयं शिरोदेशे, पार्श्वयोश्चामरावली । नवग्रही च पादान्ते, देवस्याऽन्यस्य नेक्ष्यते ॥ १ ॥

मण्डपाष्टशतं चैत्ये, स्थित्यै वप्रत्रयी वरा । गत्यै स्वर्णनवाम्भोजी, देवस्याऽन्यस्य नेक्ष्यते ॥ २ ॥

धर्म्मचक्रं पुरो भास्वत्, पृष्ठे भामण्डलं पुनः । उच्चैरिन्द्रध्वजो व्योम्नि, देवस्यान्यस्य नेक्ष्यते ॥ ३ ॥

जयत्यतिशयश्रेणी, यदीया जगदद्भुता । लक्षणानां दशशती, येषामष्टाधिका पुनः ॥ १२ ॥ यदुक्तम्—

चउरो जम्मप्पभिई, इक्कारस कम्मसंखए जाए । नव दस य देवजणिए, चउतीसं अइसए वंदे ॥ १ ॥

तेषां च देहोऽद्भुतरूपगन्धो, निरामयःस्वेदमलोज्झितश्च । श्वासोऽजगन्धो रुधिरामिषं तु, गोक्षीरधाराधवलं ह्यविश्रम् ॥ २ ॥ आहारनीहारविधिस्त्वदृश्य–श्चत्वार एतेऽतिशयाः सहोत्थाः । क्षेत्रे स्थितिर्योजनमात्रकेऽपि, नृदेवतिर्यग्जनकोटिकोटेः ३ वाणी नृतिर्यक्सुरलोकभाषा–संवादिनी योजनगामिनी च । भामण्डलं चारु च मौलिपृष्ठे, विडम्बिताऽहर्पतिमण्डलश्रि ४ साग्रे च गव्यूतिशतद्वये रुजा, वैरेतयोमार्यतिवृष्ट्यवृष्टयः । दुर्भिक्षमन्यस्वकचक्रतो भयं, स्यान्नैत एकादश कर्म्मघातजाः ॥ ५ ॥

श्रीआत्मानन्द-ग्रन्थरत्नमाला-त्रयस्त्रिंशं रत्नम् ( ३३ )

पण्डितप्रवरश्रीमत्सोमधर्मगणिविरचिता

# उपदेशसप्ततिः ।

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरशिष्यप्रवर्तकश्रीमत्कान्तिविजयमुनिपुङ्गवशिष्याणुमुनिश्रीचतुरविजयेन संशोधिता ।

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरशिष्यश्रीमत्कान्तिविजयमुनिललामशिष्यमुनिचतुरविजयोपदिष्ट-वडोदरा-वास्तव्य-श्रीओशवालज्ञातीय-झवेरी-जयचन्द्र-तनूज-ताराचन्द्र-भार्या-विजलीबाई-द्रव्यसाहाय्येन प्रकाशयित्री-भावनगरस्था-श्रीआत्मानन्दसभा ।

इदं पुस्तकं मुम्बय्यां वल्लभदासत्रिभुवनदास गांधी सेक्रेटरी जैनआत्मानन्दसभा भावनगर इत्यनेन निर्णयसागरमुद्रणालये कोलभाटवीथ्या २३, तमे गृहे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४१. आत्मसंवत् १९. विक्रमसंवत् १९७१.

एकदा श्रीमहावीरः, कल्पद्रुरिव जङ्गमः । कुर्वन् विहारं प्रोवाच, मार्ग्गे श्रीगौतमं प्रति ॥ १ ॥ यः पुरः प्रेक्ष्यते वत्स !, वराकोऽयं कृपीवलः । त्वत्तस्तस्य महांल्लाभो, भावी तद्गच्छ सत्वरम् ॥ २ ॥ तत्तथेति प्रतिपद्य, गौतमस्तत्र जग्मिवान् । आलापितो हली भद्र !, समाधिस्तव वर्त्तते ॥ ३ ॥ कस्मात्करोषि पापानि, हलं[1] वाहयसि मुधा । वराकौ वृषभावेतौ, दुर्बलौ मा कदर्थय ॥ ४ ॥ कथं पापकुटुम्बार्थ–मात्माऽनर्थे निपात्यते ?। तपस्रापोतमादाय, तदुत्तर भवाम्बुधिम् ॥ ५ ॥ इति तद्वाक्यपीयूषै–र्दवदग्ध इव द्रुमः । सिक्तः समुल्लसत्प्रीति–रभूदिति च तं जगौ ॥ ६ ॥ अहं विप्रो वसाम्यत्रा–ऽऽसन्नग्रामेऽतिनिर्द्धनः । पापश्रेण्य इवाध्यक्षाः, सन्ति मे सप्त कन्यकाः ॥ ७ ॥ वज्राग्निकल्पा पत्नी मे, तया दग्धः करोमि किम् ?। दुष्पूरोदरपूर्त्त्यर्थं, मूढैः किं न विधीयते ? ॥ ८ ॥ अतः परं त्वमेवासि, भ्राता माता पिताऽथवा । यदादिशसि तत् कुर्वे, करिष्ये नान्यथा वचः ॥ ९ ॥ ततोऽर्प्पितः साधुवेषः, स्वीचक्रे सोऽपि तं तदा । चचाल तं सहादाय, गौतमोऽभिजिनं मुदा ॥ १० ॥ सोऽवादीद्गम्यते कुत्र ?, गुरवो यत्र सन्ति मे । भवतामपि पूज्यानां, ये पूज्यास्ते तु कीदृशाः ? ॥ ११ ॥ तस्याग्रेऽर्हद्गुणाः प्रोक्ता–स्तेन सम्यक्त्वमर्जितम् । विशिष्य तु जिनेन्द्रस्य, समृद्धेरवलोकनात् ॥ १२ ॥ क्रमेण यावदद्राक्षीत्, श्रीवीरं सपरिच्छदम् । तावत्तस्य हृदि द्वेषः, कोऽप्यभूदतिदारुणः ॥ १३ ॥ गौतमः प्राह वन्दस्व, श्रीजिनं सोऽपि तं जगौ । अयं गुरुस्त्वदीयश्चे–त्तदा मे न प्रयोजनम्

१ "हलं वाहय मा मुधा" इत्यपि ॥

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay
Published by Vallabhadas Tribhuvandas Gandhi, Secretary, Jaina Atmananda Sabha, Bhavanagar.

किम् ? ॥ १२ ॥ इति प्रोच्य तया तस्मि–न्नर्पिते सोऽपि तं मुदा । गृहीत्वाऽभ्यर्च्य देवं च, तदग्रे समुपाविशत् ॥ १३ ॥ गुरुप्रदत्तश्रीमन्त्र–स्मरणैकाग्रमानसः । यावत्तिष्ठत्य यं श्रेष्ठी, तावद्देवः पुरोऽभवत् ॥ १४ ॥ अवादीच्च कपर्द्याख्यो, यक्षोऽहं वृषभप्रभोः । सेवको भद्र ! याचस्व, सर्वं यत्ते विलोक्यते ॥ १५ ॥ श्रेष्ठ्यप्युवाच मे वित्त–स्पृहा कापि न तादृशी । पुत्राणां किन्तु धर्म्मस्य, स्थैर्यार्थं किञ्चिदर्थ्यसे ॥ १६ ॥ या मयाद्य जिनेन्द्रस्य, पूजा निर्व्याजभक्तितः, । निर्मिताः तत्फलं देहि, प्रसन्नो मे भवान् यदि ॥ १७ ॥ सुरः प्राह न देवेन्द्रो–ऽप्यस्या दातुं फलं प्रभुः । अपि त्रैलोक्यराज्यं य–दीयमानं तृणायते ॥ १८ ॥ एकापि पूजा जैनेन्द्री, दुर्लभान्यपि लम्भयेत् । कल्पवल्ल्या अदेयं किं ?, किमज्ञेयं च योगिनाम् ? ॥ १९ ॥ परं चतुर्षु कोणेषु, मन्दिरे तव भाविनः । सौवर्णाः कलशा द्रव्य–भृता मदुपदीकृताः ॥ २० ॥ इदं कुसुममात्रस्य, फलं जानीहि निश्चितम् । वैतरागी यतः पूजा, दत्ते मोक्षसुखान्यपि ॥ २१ ॥ इत्युक्त्वान्तर्हिते देवे, श्रेष्ठी स्वं सौधमागतः । उवाच पुत्रान् भो भद्राः !, धर्म्मः कस्माद्विमुच्यते ? ॥ २२ ॥ अविधेयाश्रयास्तेऽपि, प्रत्यूचुस्तं क्रुधाकुलाः । रे ! जरन्मूर्ख एवासि, कदर्थयसि किं पुनः ? ॥ २३ ॥ व्यवसायेऽपि नोत्साहः, फलाऽभावे भवेन्नृणाम् । कः सन्दिग्धफले धर्म्मे–ऽभियोगं कुरुते सुधीः ? ॥ २४ ॥ ततोऽप्युवाच रे मूर्खाः !, कथं शीघ्रं फलोदयः । वृक्षोऽपि रोपितः काले, फलं यच्छति नारतः[3] ॥ २५ ॥ पक्षान्तः स्यात्फलं चेत्त–त्सेव्यो धर्मोऽन्यथा तु नो । श्रुत्वेति तातवाणीं

१ "तदा" इत्यपि । २ संवन्धम् । ३ न शीघ्रतः ॥

॥ अर्हम् ॥

# ॥ उपदेशसप्तत्याः प्रस्तावना ॥

इह हि विश्वविश्रुतजिनवरेन्द्रप्रवचने देवगुरुधर्मरूपतत्त्वत्रयस्य विशुद्धश्रद्धानमन्तरेण देशविरत्यादिविशेषधर्मो न तथाविधस्वर्गापवर्गनिरुपमसुखसंपत्संपादनसमर्थो भवत्यतश्चिरन्तनाचार्यविरचितचारुचरित्रप्रबन्धादिभ्यः पूर्वमहापुरुषोदाहरणानि संक्षिप्तीकृत्य तथा पूर्वाचार्याणामवच्छिन्नपरम्परागतचमत्कारकार्यनेकतीर्थोत्पत्तिसत्पुरुषाचरितसद्धर्मादिवृत्तान्तांश्च संगृह्य पञ्चभिरधिकारैर्देवादितत्त्वत्रयनिरूपणचणा धार्मिकनैतिकैतिह्यप्रमुखविविधविषयगर्भितोपदेशद्वारोपदर्शितदेवादिस्वरूपविशेषा अत एव भविकजनमनोऽमन्दानन्दोद्भावनपूर्वकश्रद्धासंवेगदृढीकरणप्रवणा अष्टमासीयथावसरव्याख्यानार्हा सान्वर्थाभिधेयाभिधेया उपदेशसप्ततिरियं ऐदंयुगीनानां संक्षिप्तरुचीनां देवादितत्त्वजिज्ञासूनां भविकसत्त्वानां हितहेतवे संक्षिप्ततयाऽमन्दमतिविभवभासुरैः करुणावरुणालयैर्निरमायि निर्मायान्तःकरणैर्ग्रन्थकारैः ।

अस्याः के परोपकारकरणप्रवणान्तःकरणा मुनिगणमधुकरसेव्यमानचरणकमला मुनिपुङ्गवाः कर्तारः ? इति जिज्ञासायां जातायामेतस्याः प्रत्येकाधिकारावसानगतेन—

“इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिक्रमकमलमरालमहोपाध्यायश्रीचारित्ररत्नगणिविनेयपरमाणुपण्डितश्रीसोमधर्मगणिविरचितायां श्रीउपदेशसप्ततौ पूजाचतुर्विंशतिकारूपः प्रथमोऽधिकारः ॥”

अत्रान्तरे समायाताः, सर्वाभ्यधिकरोचिषः । अष्टौ केऽपि सुरा भाभि–र्भूषयन्तो भुवस्तलम् ॥ ५ ॥ अथ नाट्यविधिं धर्म्म–देशनान्ते जिनाग्रतः । द्वात्रिंशद्भेदभङ्गीभिः, कृत्वा पृच्छन्ति ते जिनम् ॥ ६ ॥ अस्माकं भविता मोक्षः, कदा स्वामिंस्तद्वादिश[1] । किं वा पूर्वभवेऽकारि, पुण्यमेवंविधा यतः ॥ ७ ॥ वरसेनोऽपि शुश्रूषु–स्तेषां पूर्वभवादिकम् । स्वामिना कथ्यमानां तत्–कथामाकर्णयेदिति ॥ ८ ॥ पुरा हि धातकीखण्डे, महालयपुरे वरे । इभ्यः सुदत्त इत्यासी–त्पत्नी तस्य तु रुक्मिणी ॥ ९ ॥ धनो १ ऽथ विमलः २ शङ्ख ३, आरक्षो ४ वरसेनकः ५ । शिवश्च ६ वरुणश्चैव, सुयशा ८ श्चाष्ट तत्सुताः ॥ १० ॥ अन्येद्युरष्टभेदायाः, पूजायाः फलमुत्तमम् । व्याख्यायमानं सूरीन्द्रैः, शृण्वन्ति स्मेति ते मुदा ॥ ११ ॥ वरगंध १ धूव २ चक्खु–क्खएहिं ३ कुसुमेहिं ४ पवरदिवेहिं ५ । नेवज्ज ६ फल ७ जलेहिं ८, जिणपूआ अट्ठहा भणिआ ॥ १२ ॥ जो पूएइ तिसंज्झं, जिणिंदरायं सयावि गयदोसं । सो तइयभवे सिज्झइ, अहवा सत्तट्ठमे जम्मे ॥ १३ ॥ इत्यादिदेशनां श्रुत्वा, तैरष्टाभिरपि स्फुटम् । संभूयैकैकभेदस्य, नियमः प्रत्यपद्यत ॥ १४ ॥ तेषु प्राच्यः पवित्रात्मा, प्रातरानयते पयः । श्रीजिनस्याभिषेकाय, निर्म्मलं निजचित्तवत् ॥ १५ ॥ चन्दनं स्वर्णकच्चोले, न्यस्य मर्द्दितकेसरम् । कर्पूरवासितं कृत्वा, द्वितीयः पुनरानयेत् ॥ १६ ॥ कर्पूरागुरुकक्कोल–कस्तूरीसिल्हकादिकाम् । समग्रां धूपसामग्रीं, तृतीयः प्रीतितः सृजेत् ॥ १७ ॥ चतुर्थः शालिगोधूम–प्रमुखानुज्ज्वल-

१ "स्वामिन् ! ममादिश" "स्वामिंस्त्वमादिश" इत्यपि ॥

इत्यनेन गुरुपरम्परासूचकोल्लेखेन, तथैतद्ग्रन्थकारैर्ग्रन्थसमाप्त्यनन्तरविन्यस्तप्रशस्त्याम्—

"येषां बुद्धिरनुत्तराऽतिविषमग्रन्थार्थसाक्षात्कृतिं, चेतःसद्मनि दीपिकेव सृजती प्रोज्जागरा सर्वदा ।
सर्वेषामुपयोगिनी समभवद्दानप्रदीपस्तथा, ग्रन्थो यद्विहितश्छिनत्ति कृतिनामद्यापि दुष्टं तमः ॥ १५ ॥

जयन्तु ते वाचकपुङ्गवाः श्रीचारित्ररत्ना गुरवो मदीयाः । यद्भाणितावर्यविनेयवाराः, कुर्वन्त्यनेका उपकारकोटीः ॥१६॥

तद्भ्रातरः सकलकोविदमाननीयाः, पूज्या जनन्त्युदयशेखरपण्डितेन्द्राः ।
जह्रे ममापि जडिमा हृदयप्ररूढा, भास्वद्भिरात्मशुचिगोभिरनुत्तराभिः ॥ १७ ॥

तयोः पदाम्भोरुहचञ्चरीकः, शिष्योऽभवत् पण्डितसोमधर्मः ।
शास्त्राणि भूयांस्यपि यो बभाण, मर्माणि तेषां न विवेद किन्तु ॥ १८ ॥

उपदेशसप्ततिरियं, रुचिरा गुणबिन्दुबाणचन्द्रमिते १५०३ । वर्षे तेन ग्रथिता, कृतार्थनीया विबुधधुर्यैः ॥ १९ ॥

इति पद्यपञ्चकावलोकनेनापि अस्याः प्रणेतारो बृहत्तपागच्छनायकश्रीसोमसुन्दरसूरिपुरन्दरमहोपाध्यायश्रीमच्चारित्ररत्नगणिविनेयवर्याः श्रीमत्सोमधर्मगणयोऽभूवन्निति स्फुटमेवावसीयते ।

एतेषां विबुधजनमान्यानां गणिपुङ्गवानां सत्तासमयनिर्णयोऽपि अनन्तरोक्तप्रशस्तिगतैकोनविंशतितमानवद्यपद्ये विक्रमनराधिपतेस्त्र्युत्तरपञ्चदशशतसंवत्सरमिते १५०३ ग्रन्थनिर्माणकालस्य निरूपणाद् वैक्रमीयपञ्चदशषोडशशताब्द्यां निर्विरोधं सिद्ध एवेति स्फुटमवगम्यते ।

पुरे राजगृहे नन्दि–मणिकारः समृद्धियुक्। श्रीवीराद्धर्म्ममासाद्य, तमेवं कुरुतेऽन्वहम् ॥ १ ॥ सामायिकप्रतिक्रान्ति–पौषधप्रमुखाः क्रियाः। मुमुक्षुरिव कुर्वाणः, समयं गमयत्यऽसौ ॥ २ ॥ गृहीतपौषधो ग्रीष्मे–ऽन्यदा रात्रौ तृषार्दितः। उपवासत्रयप्रान्ते, स इत्थं ह्यचिन्तयत् ॥ ३ ॥ वापीकूपादिकान् वारि–पूरितान् कारयन्ति ये। तेषामेव प्रशस्या श्रीः, सर्वजन्तूपकारिणी ॥ ४ ॥ पौषधं पारयित्वाथ, प्रातर्निर्मितपारणः। कारयामासिवानेष, वापीमनुपमाकृतिम् ॥ ५ ॥ सत्रागारमठान् देव–कुलानि विपिनानि च। तस्यां द्रव्यव्ययेनापि, सर्वतो निरमापयत् ॥६॥ तत्रासक्तमना धर्म्मे, सञ्जातशिथिलादरः। प्रान्ते तु षोडशासाध्य–व्याधिपीडाविसंस्थुलः ॥७॥ षोडश रोगाश्चैवमुक्ताः—

कासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगंदरे ६।
अरसा ७ अजीरए ८ दिट्ठी ९, पुट्ठिसूले १० अरोअए ११ ॥ १ ॥
कंडू १२ जलोअरे १३ सीस १४, कन्नवेअण १५ कुट्ठए १६।
सोल एए महारोगा, आगमंमि विआहिआ ॥ २ ॥

वापीविमोहितस्वान्तो, मृत्वा तस्यामभूदयम्। दर्दुरः कर्म्मभिः को न, विडम्ब्येत सुधीरपि? ॥ ८ ॥ वापीं दृष्ट्वान्यदा जाति–स्मृतिं प्राप स दर्दुरः। अवज्ञातस्य धर्म्मस्य, ही ममाभूदिदं फलम् ॥९॥ ततो विरक्तः षष्ठादि, कुर्वन् पारणके पुनः। वाप्यामत्ति जनस्नानात्, प्रासुकं मृत्तिकोदकम् ॥ १० ॥ अन्यदोद्यानमायातं, तत्र वीरजिनेश्वरम्। लोको-

एतदुक्तव्यतिरिक्तान्येतन्मुनिमहाशयनिर्मितान्यन्यान्यपि ग्रन्थरत्नानि भवेयुर्न वेति श्रुतदृष्टाद्यभावेन न निर्णेतुं शक्यते। अस्या उपदेशसप्तत्या अधिकारपञ्चकान्तर्गतोपदेशानामनुक्रमणिका तु पृथक् संपादिताऽस्ति, तस्मात्तदर्थिना तदवलोकने परिश्रमो विधेयः।

प्रायेण सर्वजनोपकारकारकमुपदेशसप्ततिकाख्यग्रन्थरत्नमस्मदुपदेशेन गूर्जरविषयभूभामिनीभालतिलकायमानवटपत्तन-(वडोदरा) नगरनिवासिधर्मकर्मपरायणपरमश्रद्धालुशेखरस्य श्रीओशवंशमौक्तिकस्य–झवेरी–जयचन्द्र–तनूज–ताराचन्द्रस्य–जिनमतपरमश्रद्धानोद्भिन्नरोमाञ्चकञ्चुकया भार्यया विजलीबाई इति नाम्न्या सुश्राविकया स्वकीयज्ञानावरणकर्मक्षयोपशमनाय परोपकाराय चैतद्ग्रन्थरत्नमुद्रणोपयोगिपरिपूर्णद्रव्यसाहाय्यं प्रदत्तम्।

अस्या उपदेशसप्तत्याः संशोधनसमये पुस्तकानां त्रितयं समासादितम्। तेषु प्रथमं न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरशिष्यमहोपाध्यायश्रीमल्लक्ष्मीविजयमुनिपुङ्गवशिष्यश्रीमद्हंसविजयमुनिवर्यसत्कं त्र्यशीतिपत्रात्मकं संवत् १९६० तमवर्षे लिखितं शुद्धप्रायम्। द्वितीयं पुनर्न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरिवर्यसत्कं संक्षिप्तबीजकोपवर्धितं चतुरशीतिपत्रात्मकं संवत् १९६२ तमवर्षे लिखितं शुद्धप्रायम्। तृतीयं तु श्रीमदणहिल्लपुरपाटकश्रीसङ्घसंबन्धिपुस्तकभाण्डागारसत्कं पुरातनं द्वापञ्चाशत्पत्रात्मकं केनापि ग्रन्थकारप्रशस्तिं परित्यज्य लिखितं, क्वचित्केनापि अधिकपाठप्रक्षेपेणोपवर्धितं नात्यशुद्धम्।

त्मो-पवासं चापि तद्दिने । व्यधाद्गुरुमुखेनैष, भक्तिरङ्गतरङ्गितः ॥ १७ ॥ मृत्वा क्रमात्स सञ्जातो, गूर्जरत्रानरेश्वरः । भूपः कुमारपालाख्यः, श्रावकः परमार्हतः ॥ १८ ॥ ओढरोऽभूदुदयनो, जयसिंहस्तु सार्थपः । हेमसूरिर्यशोभद्रः, एवं ते क्रमशोऽभवन् ॥ १९ ॥ कौङ्कणे च महाराष्ट्रे, कीरे जालन्धरे पुनः । सपादलक्षे मेवाडे, दीपे कासीतटे तथा ॥२०॥ कर्णाटे गूर्जरे लाटे, सौराष्ट्रे कच्छसैन्धवे । उच्चायां चैव भम्भेर्यां, मारवे मालवे तथा ॥ २१ ॥ इत्यष्टादशदेशेषु, कलिकालेऽपि कश्मले । प्रावीवृतदमारिं यः, पुरा केनाप्यकारिताम् ॥ २२ ॥ यदुक्तम्—

पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्म्मं स्वयं, प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्त्तुं क्षमः श्रेणिकः ।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधा-द्यसांसाद्य वचः सुधां स जयतु श्रीहेमचन्द्रो गुरुः ॥ १ ॥
स्वस्ति श्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रं मुदा, स्वःशक्रः प्रणिपत्य विज्ञपयति स्वामिंस्त्वया सुकृतम् ।
चन्द्रस्याङ्कमृगे यमस्य महिषे यादस्सु यादःपते- र्विष्णोर्मत्स्यवराहकच्छपकुले देवाभयं तन्वता ॥ २ ॥

यावज्जीवमिति श्रीम-द्धर्म्मैकच्छत्रतां सृजन् । यो भावी गणभृत्प्राच्यः, पद्मनाभजिनेशितुः ॥ २३ ॥ इत्यल्पपूजाऽपि जिनेश्वराणां, भवेदमन्दाभ्युदयैकहेतुः । अतः समग्रेऽपि हि धर्म्मकार्ये, सैवानिशं मुख्यतया विधेया ॥ २४ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे सप्तम उपदेशः ॥ ७ ॥

---

१ "सभार्याम्" इत्यपि । २ "ऽऽसाद्य" इत्यपि ॥

एतदनन्तरोपदर्शितेन पुस्तकत्रितयेन संशोधनकर्मणि महत्साहाय्यं समुपलभमानोऽहं पुस्तकसमर्पणेनोपष्टम्भकारिणाममीषां महाशयानां महतीमुपकृतिं स्मृतिगोचरतामानयामि ।

एतत्पुस्तकत्रितयाधारेण महता प्रयासेन संशोधितेऽप्यत्र निबन्धेऽस्मद्दृष्टिदोषेणाक्षरयोजकदोषेण वा यत्र क्वचनाशुद्धिः कृता जाता वा भवेत्, तत्र संशोधनीयं कृपापरवशविशदहृदयैर्विबुधवर्यैरिति प्रार्थयते—

| | |
|---|---|
| चन्द्रर्ष्यङ्कैलाब्दे, चैत्रासितसप्तमीतिथौ वक्रे ।<br>चतुरविजयेन पत्तननगरे प्रस्तावना दृब्धा ॥ १ ॥ | न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरशिष्य-<br>प्रवर्तकश्रीमत्कान्तिविजयचरणचञ्चरीकः<br>चतुरविजयो मुनिः । |

प्रतिमामार्हतीं विना ॥ १२ ॥ बाह्यस्तु विस्तरः शेषः, सर्वोऽप्युदरपूर्त्तये । आडम्बरं विना लोको, बालिशो नहि मन्यते ॥ १३ ॥ स्नानयित्वा ततस्तत्र, गृहीत्वाऽर्चां जिनेशितुः । भट्टो जगाम शालायां, नत्वाऽपृच्छच्च तान् गुरून् ॥ १४ ॥ किंलक्षणः किंस्वरूपो, देवोऽयमभिधा तु का ? । ईदृक्षाः स्युः कियन्तश्च, सर्वमावेद्यतां प्रभो ! ॥ १५ ॥ रागादिविजयी तेजो-मयो मुक्तिपदस्थितः । देवः श्रीशान्तिनाथोऽयं, जिनानां षोडशः पुनः ॥ १६ ॥ चतुर्विंशतिरीदृक्षा, भवन्तीत्यादिसूरिभिः । निवेद्यमाने तां भट्टो, दर्शं दर्शं व्यचिन्तयत् ॥ १७ ॥ प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं, वदनकमलमङ्कः कामिनीसङ्गशून्यः । करयुगमपि यत्ते शस्त्रसम्बन्धवन्ध्यं, तदसि जगति देवो वीतरागस्त्वमेव ॥ १८ ॥ सूरयोऽप्यूचिरे वेद-पुराणादिष्वपीक्ष्यते । जिनस्यैव हि देवत्वं, यजुर्वेदवचो यथा ॥ १९ ॥

जिनप्रमाणाङ्गुलादर्वी ॐ त्रैलोक्यश्रीप्रतिष्ठितान् चतुर्विंशतितीर्थकरान् ऋषभाद्यान् वर्द्धमानान्तान् सिद्धान् शरणं प्रपद्यामहे ।

नागपुराणे—

अष्टषष्टिषु तीर्थेषु, यात्रया यत्फलं भवेत् । आदिनाथस्य देवस्य, स्मरणेनापि तत्फलम् ॥ १ ॥

वास्तुविद्यायाम्—

प्रासादमण्डपच्छत्र-पर्यङ्कासनसद्ग्रहैः । निर्दोषदृक्या मूर्त्या च, देवो नैव जिनात्परः ॥ १ ॥

॥ अर्हम् ॥

## ॥ अथ उपदेशसप्ततिविषयानुक्रमोपक्रमः ॥


| उपदेशाः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | ॥ देवतत्त्वे प्रथमाधिकारप्रक्रमः ॥ | |
| १ | श्रीजिनातिशयरूपमाङ्गल्योद्भावनम् .... | १ |
| २ | सम्यक्त्वप्राप्तिविषये हालिकोदाहरणम् .... | २ |
| ३ | सम्यक्त्वोपरिश्रीअम्बिकाख्यानम्.... .... | ३ |
| ४ | जिनार्चाकरणनिश्चये धनदश्रेष्ठिनिदर्शनम् .... | ४ |
| ५ | जिनाष्टविधपूजाविधाने बान्धवाष्टककथानकम् | ६ |
| ६ | जिनपादवन्दनाभिसन्धौ दर्दुराङ्कदेवकथा ... | ७ |
| ७ | जिनाल्पपूजाविषये श्रीकुमारपालदेवकथा .... | ८ |
| ८ | अज्ञानविहितजिनपूजोपरि देवपालकथा .... | १० |
| ९ | जिनप्रतिमादर्शनविषये श्रीशय्यंभवोदाहरणम् | ११ |
| १० | गतानुगतविहितजिनार्चाविषये कीरयुग्मकथा | १२ |
| ११ | सक्रोधपूजाविषये वामनश्रेष्ठिदृष्टान्तः .... | १३ |
| १२ | नादपूजाविषये रावणोदाहरणम् .... .... | १५ |
| १३ | द्रव्यपूजाविषये नमिविनम्योरुदाहरणम् ... | १६ |
| १४ | हीनपुष्पैः पूजाकरणे भूवल्लभनृपकथा .... | १७ |
| १५ | जिनदीपेन गृहकार्यकरणे करभीकथा .... | १८ |
| १६ | सुभावेन पूजाकरणेऽशोकमालिकथा .... | १९ |
| १७ | निर्विवेकभक्तिविषये श्रीधरकथा .... .... | २० |
| १८ | अस्वास्थ्यचित्तेन पूजाकरणे जिणहाप्रबन्धः.... | २१ |
| १९ | देवद्रव्यपरिभोगे भ्रातृद्वयोदाहरणम् .... | २२ |

त्रयोच्चमुच्चैः, स जयत्यष्टापदगिरीशः ॥ ५ ॥ स्वस्वाकृतिमितिवर्णा—ङ्कवर्णितान् वर्त्तमानजिनराजान् । भरतो वर्णित-वानिह, स जयत्यष्टापदगिरीशः ॥ ६ ॥ भरतेन मोहसिंहं, हन्तुमिवाष्टापदः कृतोऽष्टपदः । शुशुभेऽष्टयोजनो यः, स जयत्यष्टापदगिरीशः ॥ ७ ॥ यस्मिन्ननेककोट्यो, महर्षयो भरतचक्रवर्त्याद्याः । सिद्धिं साधितवन्तः, स जयत्यष्टा-पदगिरीशः ॥ ८ ॥ क्षालयितुमिव स्वैनो, जैनो यो गङ्गयाश्रितः परितः । सन्ततमुल्लोलकरैः, स जयत्यष्टापदगिरीशः ॥ ९ ॥ यत्र जिनतिलकदाना—द्दमयन्त्यापे कृतानुरूपफलम् । भाले भास्वत्तिलकं, स जयत्यष्टापदगिरीशः ॥ १० ॥ चतुरश्चतुरोऽष्टादश, द्वौ चापाच्यादिदिक्षु जिनराजान् । यत्र स्तौति शिवार्थी, स जयत्यष्टापदगिरीशः ॥ ११ ॥ एता एकादशगाथाः श्रीतीर्थकल्पे ॥

श्रुत्वेति गिरिमाहात्म्यं, दशग्रीवः प्रमोदवान् । गीतनृत्यविधिं तत्र, प्रारेभे भार्यया समम् ॥ ८ ॥ नृत्यं मन्दोदरी वीणा—वादनं च दशाननः । जिनाग्रे चक्रतुः प्रीत्या, धरणेन्द्रे पुरस्थिते ॥ ९ ॥ अथ नाट्यरसोत्कर्षे, जाते प्रीतिपदे नृणाम् । तुत्रोट तन्त्री वीणायाः, सम्पत्तिरिव पापिनः ॥ १० ॥ रावणो रसभङ्गं तं, विज्ञाय भुजकोटरात् । आचकर्ष ससामेकां, प्रलम्बामविलम्बतः ॥ ११ ॥ संयोज्य तत्र तामाशु, वीणां प्राग्वदवीवदत् । तस्योपरि तदा देवाः, पुष्पवर्षं वितेनिरे ॥ १२ ॥ रावणस्तीर्थकृत्कर्म्म, तदोपार्ज्जयदद्भुतम् । किं न दत्ते यतो जैनी, भक्तिः कल्पलताधिका ॥ १३ ॥ सन्तुष्टो धरणेन्द्रोऽपि, तस्मै पुण्यवते ददौ । अमोघविजयां शक्तिं, त्रैलोक्यजयकारिणीम्

| उपदेशाः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| २० | देवद्रव्यपरिभोगे परसमयोक्तकुक्कुरकथा .... | २३ |
| २१ | जिनार्चानियमपालने श्रावककथा.... ... | २४ |
| २२ | समत्सरजिनपूजाकरणे कुन्तलोदाहरणम् ... | २५ |
| २३ | जिनपूजाध्यानकरणे दुर्गताकथा .... ... | २६ |
| २४ | भावाभावेन जिनप्रणामकरणे श्रेष्ठिदुष्पुत्रकथा | २७ |
| | प्रथमाधिकारसमाप्तिः .... .. .... | २८ |

॥ देवतत्त्वे तीर्थरूपद्वितीयाधिकारप्रक्रमः ॥

| उपदेशाः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | श्रीरैवतदैवतचैत्यजीर्णोद्धारे सज्जनदण्डनायकप्रबन्धः .... .... .... .... | २८ |
| २ | श्रीशत्रुञ्जयमहातीर्थोद्धारे वाग्भटमन्त्रिप्रबन्धः | ३० |
| ३ | श्रीशकुनिविहारतीर्थोद्धारे श्रीआम्रदेवमन्त्रिप्रबन्धः | ३१ |
| ४ | श्रीअर्बुदगिरौ पुनस्तीर्थस्थापने विमलदण्डनायकप्रबन्धः .. ... .. .... | ३२ |
| ५ | श्रीअर्बुदगिरौ श्रीनेमिचैत्यकरणे वस्तुपालतेजःपालमन्त्रिप्रबन्धः .... .... .... | ३४ |
| ६ | श्रीजीरापल्लितीर्थोत्पत्तिप्रबन्धः . .... | ३५ |
| ७ | श्रीफलवर्धितीर्थोत्पत्तिप्रबन्धः .... .... | ३७ |
| ८ | श्रीआरासणतीर्थोत्पत्तौ पासलिश्रावकप्रबन्धः | ३८ |
| ९ | श्रीकलिकुण्डतीर्थोत्पत्तिप्रबन्धः . .... | ४० |
| १० | श्रीअन्तरिक्षतीर्थोत्पत्तिप्रबन्धः ... .... | ४१ |
| ११ | श्रीमाणिक्यदेवतीर्थोत्पत्तिप्रबन्धः.... .. | ४२ |
| १२ | श्रीस्तम्भनकतीर्थोत्पत्तिप्रबन्धः .. .... | ४३ |
| १३ | श्रीशान्तिजिनजीर्णचैत्योद्धारे रामश्रेष्ठिप्रबन्धः | ४४ |
| १४ | श्रीशत्रुञ्जयतीर्थमाहात्म्येन हत्यादिदोषविमुक्तिप्रबन्धः ... ... .... ... | ४६ |
| १५ | श्रीजगडूतीर्थयात्राप्रबन्धः .... .... | ४७ |

रभिहतं यद्दूषितं कीटकै–स्त्याज्यं तत्कुसुमं फलं दलमपि श्राद्धैर्जिनार्चाक्षणे ॥ १ ॥ पुष्पैरेवंविधैः पूजां, ये कुर्वन्ति जिनेशितुः । तेषां हीनकुले जन्म, भूवल्लभनरेन्द्रवत् ॥ २ ॥

पत्तने कामरूपाख्ये, चण्डालस्य कुलेऽभवत् । दन्तयुक्तः सुतः प्राच्य–कर्मणामनुभावतः ॥ १ ॥ अरिष्टमिति विज्ञाय, जनन्या त्याजितो बहिः । स बालकः क्रमात्तत्र, तत्रत्यनृप आययौ ॥ २ ॥ दृष्टश्च रूपवान् बालो, दयार्द्रीभूतचेतसा । आहितः परिवारेण, पालितः शिक्षितोऽपि च ॥ ३ ॥ भूमौ पतितलब्धत्वात्, स भूवल्लभसंज्ञकः । कलाः समस्ताः शिक्षित्वा, स जातः सर्ववल्लभः ॥ ४ ॥ अपुत्रिणा नृपेणाऽथ, स राज्ये विनिवेशितः । कक्षीकृता स्वयं दीक्षा, काले ज्ञानी बभूव च ॥ ५ ॥ अथाऽन्यदा स राजर्षि–रुत्पन्नामलकेवलः । पुत्रस्य प्रतिबोधाय, प्रासस्तत्रैव पत्तने ॥ ६ ॥ राजापि सपरीवारो, वन्दितुं प्रासवान्मुनिम् । व्याजहार मुनिर्धर्मं, संसारासारतामयम् ॥ ७ ॥ सा मातङ्ग्यपि तत्रागात्, नृपं दृष्ट्वा च मोहिता । प्रश्रवन्ती पयः पुत्र–स्नेहो हि दुरतिक्रमः ॥ ८ ॥ तथारूपां च तां दृष्ट्वा, नृपः पप्रच्छ तं मुनिम् । केयं कथं च मे मोहः, एतस्यामपि हे मुने! ॥ ९ ॥ मुनिः प्राह कुमारेयं, तव माता यतो मया । त्वं बहिष्पतितो लेभे, राज्यं चाऽपुत्रिणा ददे ॥ १० ॥ नृपः प्राह कुतो हीन–कुले मे तात! सम्भवः । कथं वा राज्यसम्प्राप्तिः, सर्वमेतन्निवेदय ॥ ११ ॥ मुनिः प्राह महाराज!, प्राग्भवे त्वं महर्द्धिकः । श्रावकः समभूः सर्व–व्यवहारिशिरोमणिः ॥ १२ ॥ दानध्यानतपःपूजा–पौषधावश्यकादिभिः । चिरं प्रभावनां चक्रे, भवान् श्रीजि-

| उपदेशाः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १६ | श्रीभरतचक्रवर्त्तितीर्थयात्राप्रबन्धः | ४८ |
| १७ | श्रीतीर्थयात्रायां आभूमन्त्रिप्रबन्धः | ५० |
| | द्वितीयाधिकारसमाप्तिः | ५१ |
| | ॥ गुरुतत्त्वे तृतीयाधिकारप्रक्रमः ॥ | |
| १ | गुरुगुणोत्कीर्तने पद्मशेखरनृपोदाहरणम् | ५१ |
| २ | गुरुवन्दनकदाने श्रीकृष्णवासुदेवोदाहरणम् | ५३ |
| ३ | गुरुपादपर्युपासने नागार्जुननिदर्शनम् | ५४ |
| ४ | गुर्वादिभक्तिविषये मन्त्रिपेथडदेवप्रबन्धः | ५५ |
| ५ | जिनशासनप्रभावनायां श्रीजिनप्रभसूरिप्रबन्धः | ५७ |
| | तृतीयाधिकारसमाप्तिः | ५९ |
| | ॥ धर्मतत्त्वे चतुर्थाधिकारप्रक्रमः ॥ | |
| १ | नमस्कारविषये श्रीदेवकुमारोदाहरणम् | ६० |
| २ | कषायविपये कुम्भकारकथा | ६० |
| ३ | क्रोधविपये सूरब्राह्मणनिदर्शनम् | ६१ |
| ४ | माने उज्झितोदाहरणम् | ६३ |
| ५ | मायायां पापबुद्धिकथानकम् | ६४ |
| ६ | लोभविपये सागरश्रेष्ठिकथा | ६५ |
| ७ | गुणोपार्जने तुरङ्गमोदाहरणम् | ६७ |
| ८ | गुणिमत्सरे पत्तनीयब्राह्मणोदाहरणम् | ६८ |
| ९ | वचनचातुर्ये डामरदूतोदाहरणम् | ६९ |
| १० | न्याये यशोवर्मोदाहरणम् | ७१ |
| ११ | पर्वानुष्ठाननिश्चये सूर्ययशोनरेन्द्रनिदर्शनम् | ७३ |
| १२ | विधिपूर्वकधर्मानुष्ठाने कामधेनुकथा | ७५ |
| | चतुर्थाधिकारसमाप्तिः | ७६ |

पुष्पै-र्नवभिर्जिनमार्चयत् ॥ ५ ॥ एलाभिधपुरे राजा, जितारिर्नयतत्परः । प्रिया तस्याभवन्नाम्ना, श्रीकान्ता शील-शालिनी ॥ ६ ॥ तत्रैवास्ति वणिग्मुख्यो, धनदत्तो महर्द्धिकः । स मृत्वा मालिकस्तस्य, पुण्ययोगात्सुतोऽभवत् ॥७॥ नाम्ना दत्तः स विख्यातो, द्वितीये जन्मनि क्रमात् । नवानां द्रम्मलक्षाणा-मीश्वरो बहुसम्मतः ॥ ८ ॥ तत्रापि जन्म-नि श्रीम-ज्जिनपूजादिकर्म्मणि । एकतानमनाः प्राप, भोगान् रोगविवर्ज्जितान् ॥ ९ ॥ पुनस्तत्र पुरे मृत्वा, बभूवेभ्यो गुणाकरः । नवानां द्रम्मकोटीना-मीशस्तार्त्तीयिके भवे ॥ १० ॥ मृत्वा स्वर्णपुरे स्वर्ण-नवलक्षीविभुः पुनः । भवे च-तुर्थे सञ्जातः, स इभ्यः श्रीधराभिधः ॥ ११ ॥ पञ्चमेऽथ भवे ग्रामे, तत्रैव कमलाकरः । महेभ्यः स्वर्णकोटीनां, नवा-नामीश्वरोऽभवत् ॥ १२ ॥ अथ षष्ठभवे रत्न-पुरे श्रेष्ठी बभूव सः । रत्नानां नवलक्षाणां, स्वामी रत्नाङ्गदाभिधः ॥१३॥ नवानां रत्नकोटीना-मीशोऽसौ सप्तमेऽभवत् । महेभ्यो भुवनानन्द-दाता भुवनशेखरः ॥ १४ ॥ वल्लवक्ष्मापतेः पुत्रो, बभूवाष्टमजन्मनि । नाम्ना सुनन्दनो ग्राम-नवलक्षीपतिर्नृपः ॥ १५ ॥ ततः स नवमे जन्म-न्यासीन्नवनिधीश्वरः । जितशत्रुरिति क्ष्मापः, पूजाफलमिदं कियत् ॥ १६ ॥ सोऽन्यदा नृपतिः श्रुत्वा, पार्श्वे पार्श्वजिनेशितुः । निजपूर्व-भवान्मूला-ज्जातिस्मृतियुतोऽभवत् ॥ १७ ॥ श्रीपार्श्वसन्निधौ दीक्षां, गृहीत्वोग्रतपःपरः । अनुत्तरे सुरो जज्ञे, राज्यं प्राप्य च सेत्स्यति ॥ १८ ॥ उक्तंच—

पूर्वं नवाङ्गं नवभिः प्रसूनैः, पूजा कृताऽशोककमालिकेन । ततो नवस्वेष भवेषु लक्ष्मीं, नवां नवां प्राप शिवर्द्धिमन्ते ॥ १ ॥

| उपदेशाः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | ॥ धर्मतत्त्वे पञ्चमगृहस्थधर्माधिकारप्रक्रमः ॥ | |
| १ | दानविषये धर्मराजनिदर्शनम् .... .... | ७७ |
| २ | अनुकम्पायां कपोतदम्पतीकथा .. .... | ७८ |
| ३ | धर्मदृढताविषये कुलानन्दकथा .... .... | ७९ |
| ४ | यतनायां मृगसुन्दरीकथा .... ... | ८० |
| ५ | परुषभाषणे जननीतनूजोदाहरणम् .... | ८२ |
| ६ | सत्यभाषणे जगत्सिंहप्रबन्धः .... ... | ८३ |
| ७ | शपथाऽकरणे मदनसिंहप्रबन्धः .... .... | ८५ |
| ८ | अदत्तविषये व्यवहारिचतुष्ककथा... .... | ८६ |
| ९ | अब्रह्मविषये तापसोदाहरणम् .... ... | ८८ |
| १० | परिग्रहपरिवर्जने विद्यापतिकथा .... .... | ८९ |
| ११ | रात्रिभोजननियमाराधनविराधने मित्रत्रयकथा | ९० |
| १२ | सामायिकविषये केसरीचौरोदाहरणम् .... | ९२ |
| १३ | प्रतिक्रमणनियमपालने ग्रथिलभीमदेवमन्त्रिसज्जनोदाहरणम् ... .... .... | ९३ |
| १४ | पौषधव्रतपालने सुदत्तकथानकम् .... ... | ९५ |
| १५ | सुपात्रदाने भद्रकश्रेष्ठिनिदर्शनम् .... .... | ९६ |
| १६ | साधर्मिकवात्सल्ये दण्डवीर्यकथा .... .... | ९७ |
| १७ | ज्ञानसाधारणद्रव्यभक्षणे जिनदत्तजिनदासश्राद्धद्वयोदाहरणम् .... .... .... | ९८ |
| | पञ्चमाधिकारसमाप्तिः ... .... .... | १०१ |
| | ग्रन्थकारप्रशस्तिः .... .... .... | १०१ |

श्रीजिनेन्द्रक्रमाम्भोजपूजाविधि–ध्यानमात्रादपीष्टं लभन्ते सुखम् ।
सा यथा दुर्ग्गता वीरतीर्थेशितुः, पूजनायोत्सुका देवभूयङ्गता ॥ १ ॥

माकन्दीति पुरी ख्याता, विद्यतेऽत्रैव भारते । नाम्ना धाम्ना च तत्राऽभूत्, जितारिः पृथिवीपतिः ॥ १ ॥ तत्रैक-श्रेष्ठिनो गेहे, स्थविरा काचिदक्षमा । अस्ति स्वोदरपूर्त्त्यर्थं, नीचकर्म्माणि कुर्वती ॥ २ ॥ दासीव सकलं श्रेष्ठि–गृह-कार्यं करोति सा । इन्धनानयनार्थं च, ययौ क्वापि वनेऽन्यदा ॥ ३ ॥ तदा च ग्रीष्मकालोऽभूत्, दुष्प्रापाणींधनान्यपि । तेन दूरेऽपि गत्वा सा, चिराद्दारुण्यमीलयत् ॥ ४ ॥ वृद्धत्वेन श्लथं किञ्चित्, दारुभारं निबध्य सा । मन्दसत्त्वात्कृतोत्सूरा, ववले स्वपुरं प्रति ॥ ५ ॥ आगच्छन्त्याश्च वृद्धाया–स्तस्या मार्गे शनैः शनैः । काष्ठभारादिन्धनानि, द्वित्राणि न्यपतन्भुवि ॥६॥ तान्यादातुं करेणाऽर्द्धा–वनता भारभारिता । क्षुत्तृड्भ्यां पीडिताबाढ–मक्षमा यावदस्ति सा ॥ ७ ॥ तावच्चरणविन्यासैः, पावयन् पृथिवीतलम् । समवासरदुद्याने, तत्र श्रीवीरतीर्थपः ॥ ८ ॥ क्षणात्समवसरणं, प्रारभन्त दिवौकसः । भूतभाविभवत्तीर्थ–कृतां स्थितिरियं खलु ॥ ९ ॥ तथा चोक्तम्—

"अब्भिंतर–मज्झ–बहिं, तिवप्प मणि–रयण–कणय–कविसीसा । रयणज्जुणरुप्पमया, वेमाणिअजोइभवणकया ॥१॥ वट्टंमि दुतीसंगुल–तित्तीसधणुपिहुल पणसयधणुच्चा । छद्धणुसय इगकोसं–ऽतरा य रयणमयचउदारा ॥ २ ॥ चउरंसे इगधणुसय, पिहु वप्पा सड्ढकोसअंतरया । पढमबीआ बीयतइआ, कोसंतर पुव्वमिव सेसं ॥ ३ ॥ सोवाणसहस-

|| अर्हम् ||

|| न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरचरणकमलेभ्यो नमः ||

# || श्रीमत्सोमधर्मगणिविरचिता उपदेशसप्ततिका ||

श्रीसोमसुन्दरगुरूज्ज्वलकीर्त्तिपूरः, श्रीवर्द्धमानजिन एप शिवाय वः स्तात् । भव्या भवन्ति सुखिनो यदुदाहृतं श्री–चारित्ररत्नममलं परिपालयन्तः ॥ १ ॥ श्रीरत्नशेखरगुरुप्रवरा जयन्तु, नैकक्षमाधरनिषेव्यपदारविन्दाः । ऐदंयुगीनमुनिषु प्रवरक्रियेषु, श्रीसार्वभौमपदवीं दधतेऽधुना ये ॥ २ ॥ कथाप्रबन्धादिषु भूरिविस्तरे–ष्वनादरं ये दधतेऽल्पमेधसः । हिताय तेषामुपदेशसप्ततिः, प्रारभ्यते सर्वजनोपयोगिनी ॥ ३ ॥

सम्यक्त्वमूलं देवादि–तत्त्वत्रयमुदाहृतम् । तस्य स्वरूपं ज्ञातव्यं, सम्यग्धेयं च तत्त्रिधा ॥४॥ देवतत्त्वे गुरौ तत्त्वे, धर्म्मतत्त्वे तृतीयके । द्वावेको द्वौ च वक्ष्यन्ते–ऽधिकारा अत्र पञ्च तु ॥ ५ ॥ पूजाचतुर्विंशतिकाऽत्र वाच्या, प्राच्ये कियत्तीर्थनुतिर्द्वितीये । गुरुस्तृतीये द्विविधश्च धर्म–स्तुर्ये तथा पञ्चमकेऽधिकारे ॥ ६ ॥ अर्हद्गुणस्मृतिध्यान–यात्राचैत्यस्तवार्चनैः । सद्धर्म्मगुरुसेवाद्यैः, सम्यक्त्वस्थिरता भवेत् ॥ ७ ॥ प्रायः कुटुम्बधनधान्यसुवर्णरत्न–प्रायेषु वस्तुषु

कश्चिद् , दुर्ग्गतो नाम कर्म्मतः । यात्रार्थी मरुदेशीय-स्तं प्रदेशमुपागमत् ॥ १४ ॥ द्रम्मपञ्चकमेतस्य, सर्वस्वं विद्यते
पुनः । तेनैव व्यवसायादि, कुर्वाणोऽस्त्युदरंभरि ॥ १५ ॥ तेनाऽऽसन्नजनाः पृष्टाः, किमित्येष महाजनः । तथाभूतं च
वृत्तान्तं, तेऽपि तस्मै न्यवेदयत् ॥ १६ ॥ सोऽपि चिन्तितवानेते, धनिनोऽपि मितंपचाः । यदेवंविधतीर्थेऽत्र, सर्वे-
स्वं न व्ययन्त्यमी ॥ १७ ॥ गत्वरेणाऽमुना किं मे, धनेन भयहेतुना । तीर्थकार्ये भवत्वेतत् ,सफलं द्रम्मपञ्चकम् ॥ १८ ॥
चिन्तयित्वेति सोत्कण्ठं, गत्वा नत्वा च मन्त्रिणे । निवेद्य स्वस्वरूपं च, तस्मै तद्द्रव्यमार्पयत् ॥ १९ ॥ अहो ! साहस-
मेतस्य, सर्वस्वस्य समर्पणात् । अपि भूरितरे द्रव्ये, सर्वस्वं स्वं व्ययेत कः ॥ २० ॥ यतः—

"दानं दरिद्रस्य विभोः प्रशान्ति-र्यूनां तपो ज्ञानवतां च मौनम् ।
इच्छानिवृत्तिश्च सुखोचितानां, दया च भूतेषु दिवं नयन्ति ॥ १ ॥"

चिन्तयित्वेति तन्नाम, समग्रव्यवहारिणाम् । शिरसि न्यस्तवान्मन्त्री, विलक्षास्तेऽभवंस्ततः ॥ २१ ॥ तान्वैमनस्य-
मापन्नान् , बभाषे मन्त्रिपुङ्गवः । सर्वस्वमर्पयाञ्चक्रे, यथाऽयं दुर्ग्गतोऽपि सन् ॥ २२ ॥ यदि क्रियेत युष्माभि-र-
प्येवं तर्हि बान्धवाः ! । भवतामपि तन्नाम, मुख्यमत्र विधीयते ॥ २३ ॥ इत्युक्ते ते दधुर्मौनं, दुर्ग्गतोऽप्येष तद्दिने ।
तीर्थोपवासमाधाय, पादलिप्तपुरे गतः ॥ २४ ॥ मार्ग्गयित्वा कणानेष, पाकार्थं यावदुद्यतः । चरिकां दत्तवान् भूमौ,
तावत्प्रादुरभून्निधिः ॥ २५ ॥ सहस्रांशुसमज्योतिः, सौवर्णिकसहस्रभृत् । तन्निधानं विलोक्यैष, जातः प्रोत्फुल्ल-

मयोक्ता ते, भूमिका द्रव्यसंयुता ॥ १७ ॥ तत्रैव प्रतिमा प्रौढा, श्रीयुगादिजिनेशितुः । अस्ति न्यासीकृता ता च, दृष्ट्वा तैर्नो निपेत्स्यते ॥ १८ ॥ प्रतिमां तां च केऽप्याहु–स्तत्रैव प्रागभूदियम् । केचित्तदैवानीतेयं, देव्येत्याहुर्बहुश्रुताः ॥ १९ ॥ भग्नेऽपि तद्विवादेऽथ, चैत्यं निष्पद्यते गिरौ । दिवाजातः परं रात्रौ, कर्मस्थायो विनश्यति ॥ २० ॥ षण्मास्येवं व्यतिक्रान्ता, सचिन्तो विमलस्ततः । पुनः प्रत्यक्षतां निन्ये, देवीमम्बामुपासनैः ॥ २१ ॥ अब्रवीदम्बिका मन्त्रिन् !, अधस्तादस्य भूभृतः । वालिनाहाभिधानोऽस्ति, नागराजोऽतिदुर्म्मदः ॥ २२ ॥ मिथ्यात्वदूषितो जैन—प्रासादं स न सासहिः । तदस्याराधनोपायं, सकर्णाऽऽकर्णयाऽऽधुना ॥ २३ ॥ पूजोपहारमादायो–पवासत्रितयीयुतः । सन्ध्यायां ध्यानमाधाय, वालीनाहं त्वमाह्वय ॥२४॥ मार्ग्गयत्येप नैवेद्यं, चेत्प्रदातव्यमेव तत् । मद्यादि याचते तर्हि, खड्गमुद्यम्य भापयेः ॥ २५ ॥ तत्र खड्गेऽवतीर्णाऽहं, करिष्यामि त्वदीप्सितम् । इति प्रोच्य गता देवी, सचिवोऽपि तथाऽकरोत् ॥ २६ ॥ एवं कृते स भीतोऽम्वा–वचसा चोपशान्तिभाक् । सम्यक्त्वं प्राप्य तत्रैव, क्षेत्रपालो बभूव च ॥ २७ ॥ प्रासादः पूर्णतां प्राप–स्ततः सह मनोरथैः । अष्टकोट्यः सुवर्णानां, मन्त्रिणाऽत्र व्ययीकृताः ॥ २८ ॥ अष्टाष्टखैकसंख्येब्दे १०८८ रीरीमूर्त्तिमतिष्ठिपत् । श्रीयुगादिजिनाधीशं, तत्र श्रीदण्डनायकः ॥ २९ ॥ ततः श्रीभीमदेवोऽपि, बहुमानपुरस्सरम् । विमलं सान्त्वयामास, पुण्येनाऽसाध्यमस्ति किम् ? ॥ ३० ॥ तद्भ्राता वाहिलस्तत्र, मण्डपाद्यमचीकरत् । व्यवहारिवरैर्देव–कुलिकादि च कारितम् ॥ ३१ ॥

खे धर्म्मचक्रं चमराः सपाद–पीठं मृगेन्द्रासनमुज्ज्वलं च । छत्रत्रयं रत्नमयध्वजोऽह्रि–न्यासे च चामीकरपङ्कजानि ॥ ६ ॥ वप्रत्रयं चारु चतुर्मुखाङ्गता, चैत्यद्रुमोधोवदनाश्च कण्टकाः। द्रुमानतिर्दुन्दुभिनाद उच्चकै-र्वातोनुकूलः शकुनाः प्रदक्षिणाः

गन्धाम्बुवर्षं वहुवर्णपुष्प–वृष्टिः कचश्मश्रुनखाऽप्रवृद्धिः। चतुर्विधा मर्त्यनिकायकोटि–र्जघन्यभावादपि पार्श्वदेशे॥८॥

ऋतूनामिन्द्रियार्थाना–मनुकूलत्वमित्यमी । एकोनविंशतिर्दैव्या–श्चतुस्त्रिंशच्च मीलिताः ॥ ९ ॥

येषां पञ्चाऽधिकत्रिंश–द्वचनातिशयाः पुनः । भ्राजन्तेऽष्टाङ्गयोगश्च, येषां तादात्म्यमीयिवान् ॥ १३ ॥ यथावस्थितवस्तूनां, व्यवस्थापनतत्परम् । अनेकान्तमतं येषां, जागर्त्यद्यापि सिंहवत् ॥ १४ ॥ लोकेषु शान्तिकाद्यं, यच्च चतुस्त्रिंशिकादिलिखनेन । स जिनातिशयानां खलु, महिमा तत्संख्यया ज्ञेयः ॥ १५ ॥

इति सदतिशयसमृद्धिं, प्रतिप्रभातं जिनाधिनाथानाम् । ये संस्मरन्ति मनुजा–स्ते स्युः श्रेयोभिराढ्यतमाः ॥ १६ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे श्रीजिनातिशयरूपमाङ्गल्योपदेशः प्रथमः ॥ १ ॥

---

भो भव्या ! यदि वः शिव जिगमिषा सम्यक्त्वमेकं तदा, स्वस्वान्ते ध्रियतां स्थिरं किमपरैर्वाह्यक्रियाडम्बरैः । अन्तःसागरकोटिकोटिविहितायुर्वर्जकर्मस्थितौ, यल्लभ्यं प्रतिभूश्च मोक्षविषये तस्मिन् कथं नादरः ? ॥ १ ॥ वलादपि श्राद्धजनस्य दीयते, सद्दर्शनं सर्वसुखैकजन्मभू । व्यदीधपद्वीरजिनस्तदुद्यमं, श्रीगौतमेनापि न किं कृषीवले ? ॥ २ ॥

तेनाऽनुक्तेऽप्यसौ चौरं, त्रिदिनावध्यमूमुचत् ॥ १९ ॥ नीतो जिनगृहस्यान्त–श्चौरस्तच्चैत्यदर्शनात् । प्राप्तो जातिस्मृतिं प्राह, तदग्रे प्राग्भवं निजम् ॥ २० ॥ तथाहि प्रागिह ग्रामे, श्रेष्ठी राम इति श्रुतः । अभूद्भूरिविभूतीना–माश्रयः श्रावकोत्तमः ॥ २१ ॥ तेनेदं चैत्यमारेभे, निर्मापयितुमादरात् । परं चैत्येऽर्द्धनिष्पन्ने, क्षीणद्रव्यो बभूव सः ॥ २२ ॥ आराध्य सिद्धपुरुषं, कोटीवेधरसं ततः । प्राप्य जातेन वित्तेन, पूर्णं चैत्यमकारयत् ॥ २३ ॥ सौवर्णदण्डकलशं, मण्डपश्रेणिसुन्दरम् । सद्देवकुलिकायुक्तं, तच्चैत्यं क्रमतोऽजनि । ॥ २४ ॥ कारं कारं तत्र भक्त्या, स्तुत्यर्चादि जिनेशितुः । स श्रेष्ठी वार्द्धके प्राप्ते, तपस्यां प्रतिपन्नवान् ॥ २५ ॥ किञ्चिद्व्रतं विराध्याऽथ, स मृत्वाप कुदेवताम् । ततश्च्युत्वाऽभवत्सोऽहं, तस्करस्तास्करे कुले ॥ २६ ॥ प्रासादमद्य दृष्ट्वाहं, जातिस्मरणमासवान् । जीर्णोद्धारं विधाप्याऽत्र त्वं मे साधर्म्मिकोऽभवः ॥ २७ ॥ न केवलं त्वया स्वात्मा, जिर्णोद्धारवितन्वता । समुद्धृतोऽहमप्युच्चैः, पतन्नरककोटरे ॥ २८ ॥ इत्यालापपरश्चौरो, देवतादत्तवेषभृत् । सञ्जातः संयतो भूप–प्रमुखास्तं ववन्दिरे ॥ २९ ॥ क्रमाच्च स गतो मोक्षं, विजयोऽप्याप्य सद्व्रतम् । सौधर्मे त्रिदशीभूय, भवेनैकेन निर्वृतः ॥ ३० ॥ इति चैत्यनवीननिर्मितेः, फलमकर्ण्य तदुद्धृतेस्तथा । भविकाः ! भवभञ्जनेच्छवः, क्रियतां चैत्यविधापने मनः ॥ ३१ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे त्रयोदश उपदेशः ॥ १३ ॥

यत्र जीवद्युगादीश–प्रासादोऽकारि चक्रिणा । चतुर्युग्यां च चत्वारि, यस्य नामानि जज्ञिरे ॥ २२ ॥ पर्वतारोहसमये, तृषाक्रान्तजनार्थितः । लब्धिमांश्चैल्लणः साधु–श्चक्रे पथि तटाकिकाम् ॥ २३ ॥ नदीकुण्डादिकं तत्त–न्महिमोक्तिपुरस्सरम् । शक्तिर्सिंहेनोच्यमानं, भरतोऽपि न्यभालयत् ॥२४॥ शक्रोऽप्यत्रान्तरे प्राप्त–श्चक्री तेन समं तदा । राजादनीं नमश्चक्रे, तीर्थभूता हि सा यतः ॥ २५ ॥

नवनवई पुव्वाइं, विहरंतो आगओ अ सित्तुंजे । उसभो देवेहिं समं, समोसढो पढमतित्थयरो ॥ १ ॥

एकोनसप्ततिकोटा–कोट्योऽशीतिश्च पञ्चयुग् । कोटिलक्षाश्चतुश्चत्वा–रिंशत्कोटिसहस्रकाः ॥ २६ ॥ ६९८५४-४०००००००० वारानेतावतः स्वामी, समागत्यात्र पर्वते । अस्या अधस्ताद्विदधे, सरसां धर्म्मदेशनाम् ॥ २७ ॥ शक्रश्चक्रिणमाचष्ट, कालो नातः परं वरः । विना मूर्त्तिं गिरावेव, न श्रद्धास्यन्ति मानवाः ॥ २८ ॥ तीर्थं पर्वत एवायं, पवित्रस्तीर्थकृत्क्रमैः । विशेषाद्वासनावृद्ध्यै, प्रासादः स्यात्तदा वरम् ॥ २९ ॥ ततश्चक्री चतुर्युक्ता–ऽशीतिमण्डपभासुरम् । क्रोशोच्चं सार्द्धगव्यूत–दीर्घं रत्नमणीमयम् ॥ ३० ॥ धनुःसहस्रविस्तारं, सदेवकुलिकायुतम् । त्रैलोक्यविभ्रमं नाम, प्रासादं निरमापयत् ॥ ३१ ॥ चतुर्दिक्षु चतस्रः श्री–युगादिजिनमूर्त्तयः । प्रासादे तत्र सद्वर्णाः, स्वर्णमय्यो विरेजिरे ॥ ३२ ॥ श्रीपुण्डरीकगणभृ–च्छिष्याः श्रीनाभसूरयः । प्रतिष्ठाविस्तरांश्चक्रु–स्तत्र चत्र्यादिहर्षदान् ॥ ३३ ॥ इत्थं तत्र महान् विधाय विविधांश्चक्री गतो रैवते, तत्राप्युच्चमचीकरद्युगयुगैर्विभ्राजितं मण्डपैः । श्रीशैवेयजिनस्य

॥ १४ ॥ गृहाण वेपं यास्यामि, शिष्यो नास्मि तवाप्यहम्। इत्युक्त्वा त्यक्तवेषोऽसौ, मुष्टिं बद्ध्वा प्रनष्टवान् ॥ १५॥ हसन्ति सर्वेऽपीन्द्राद्या–स्तादृक्तच्चेष्टितेक्षणात् । अहो ! उपार्जितः शिष्यो, वरीयानिन्द्रभूतिना ॥ १६ ॥ पप्रच्छ गौतमो वीरं, मनाग् लज्जितमानसः । किमिदं कारितं स्वामिन् !, तत्त्ववार्त्तां निवेदय ॥ १७ ॥ ग्रन्थिभेदः कृतोऽनेन, वत्साऽर्हद्गुणचिन्तनैः । लाभस्तवाभूदस्यैष[1], द्वेषो यन्मयि तत् शृणु ॥ १८ ॥ पुरा पोतनकग्रामे, प्रजापतिनृपाङ्गजः । अभूवं वासुदेवोऽहं, त्रिपृष्ठ इति विश्रुतः ॥ १९ ॥ अश्वग्रीवो महाराज–स्तदा प्रत्यर्द्धचक्र्यभूत्[2] । त्रिपृष्ठहस्तात्तन्मृत्युं, निमित्तज्ञोऽन्यदाब्रवीत् ॥ २० ॥ त्रिपृष्ठस्योपरि तदा, द्वेषमेष भृशं वहन् । चक्रे तन्मारणोपायान्, विफलास्ते तु जज्ञिरे ॥ २१ ॥ शालिक्षेत्रेऽन्यदा तस्य, सिंहः कोऽपि बलोत्कटः । करोत्युपद्रवं हन्तुं, न केनापि स पार्यते ॥ २२ ॥ तद्वारकेण रक्षन्ति, नृपा मुख्यनृपाज्ञया । प्रजापतिक्षितिपते–रन्येद्युर्वारकोऽभवत् ॥ २३ ॥ निषिध्य पितरं तत्र, त्रिपृष्ठो रक्षितुं ययौ । वेगवत्तरमारुह्य, रथं सारथिसंयुतः ॥ २४ ॥ तेनालापितमात्रोऽसौ, सिंहस्तं प्रत्यधावत । क्षमन्ते पौरुषोपेता, रेकारं किमु भूस्पृशाम् ? ॥ २५ ॥ शुक्तिसंपुटवद्द्वेधा, कृत्वा तस्योष्ठयामलम्[3] । विदार्यार्द्धमृतं चक्रे, सिंहं स प्रौढविक्रमः ॥ २६ ॥ कृतो जयजयाराव, आसन्नव्यन्तरामरैः । निनिन्द स्वं पुनः सिंहो, नृमात्रेण हतो हहा ! ॥ २७ ॥ तदा मधुरया वाचा, सारथिस्तमसान्त्वयत् । भविता वासुदेवोऽयं, रङ्कमात्रमिदं नहि

१ "लाभस्तथाभू–" इत्यपि । २ प्रतिवासुदेवः । ३ युग्मम् ॥

पितो निजे । मूर्द्धाभिषिक्तता प्राप्तः, समस्ते राजमण्डले ॥ २२ ॥ कामरूपपुरेशोऽपि, तस्य किङ्करता दधौ । वपुरे ! श्रीनमस्कार–महिमा कोऽप्यनुत्तरः ॥ २३ ॥ यतः—

अहो ! पञ्चनमस्कारः, कोऽप्युदारो जगत्सु यः । सम्पदोऽष्टौ स्वयं धत्ते, दत्तेऽनन्तास्तु ताः सताम् ॥ १ ॥

श्रीनमस्कारमन्त्रैक–परावर्त्तनतत्परः । कालं कृत्वा स भूजानि–र्माहेन्द्रे त्रिदशोऽभवत् ॥ २४ ॥

इति नमस्कृतिसंस्मृतिजं फलं, श्रुतिपुटैः परिपीय शरीरिणः ।
हृदि जपन्तु तमेव नमन्तु च, प्रणयतः परमेष्ठिपदाम्बुजम् ॥ २५ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे प्रथम उपदेशः ॥ १ ॥

---

कषो भवः प्राणिगणस्य हिंसना–त्तस्याय एभ्यो भवतीति युक्तितः । उक्ताः कषाया भुजगा इवाङ्गिना–मेते कथं स्युः कुशलाय वर्द्धिताः ॥ १ ॥ सकारणास्ते गतकारणा वा, विधीयमाना भववृद्धये स्युः । द्विरुक्तिकोद्वेजित एककुम्भकृ–द्यथा वृथानर्थततीर्वितेनिवान् ॥ २ ॥

तथाहि ग्राम एकस्मि–न्निवसन्ति स्म तस्कराः । प्रायस्तेकर्पुकाः सर्वे, परद्रव्यापहारिणः ॥१॥ यद्यथैवोक्तमेकेन, तथैवान्ये तु वादिनः । द्विरुक्तिका इति ख्याता–स्तेन ते पश्यतोहराः ॥२॥ तत्र ग्रामेऽन्यदा कोऽपि, कुम्भकारः समाययौ ।

॥ २८ ॥ पुरुपेन्द्रस्य हस्तेन, चेन्मृतः किं विपीदसि ? । मर्त्यलोके ह्ययं सिंह–स्तिर्यग्योनौ पुनर्भवान् ॥ २९ ॥ इति हृष्टस्तया वाचा, मृतः सिंहः समाधिना । भ्रामं भ्रामं भवाम्भोधौ, ते त्रयोऽप्यभवत्क्रमात् ॥ ३० ॥ त्रिपृष्ठजीवो यः सोऽहं, सिंहजीवः कृषीवलः । भवांश्च सारथेर्जीवः, तदिदं भवनाटकम् ॥ ३१ ॥ त्वया मधुरया वाचा, यदसौ प्रीणितः पुरा । मया हतो वराकस्तु, स्नेहवैरे ततस्त्वम् ॥ ३२ ॥

यास्यत्येष हली तु पुद्गलपरावर्त्तार्द्धमध्ये शिवं, त्वत्तो दर्शनमासवान् द्विघटिकं तेनोद्यमः कारितः ।
श्रुत्वेन्द्रप्रमुखा इति व्यतिकरं जाता दृढा दर्शने, तद्भो भव्यजना ! भवद्भिरपि तच्चित्ते चिरं स्थाप्यताम् ॥३३॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे सम्यक्त्वोपरि हालिकोपदेशो द्वितीयः ॥ २ ॥

---

श्रीवीतरागस्मरणैकताना, भवन्ति ये ते सुखभाजनं स्युः । यथाम्बिका रैवतदैवतं श्री–नेमिं स्मरन्ती भवति स्म देवी ॥१॥

सुराष्ट्रविषये कोटी–नारनाम्नि पुरेऽभवत् । सोमभट्ट इति ख्यातो, मिथ्यादृग् द्विजपुङ्गवः ॥ १ ॥ देवशर्माख्य-भूदेव–तनया विनयान्विता । अम्बिका तस्य भार्याभू–दभङ्गसुभगाकृतिः ॥ २ ॥ परं सा श्राविका शील–सम्पन्ना परमार्हती, तयोर्द्वयोरपि प्रीति–रतेन मन्दायते भृशम् ॥ ३ ॥ तथापि तेन सार्द्धं सा, भुञ्जाना भोगजं सुखम् । तनयौ जनयामास, शुभङ्करविभङ्करौ ॥ ४ ॥ अन्यदा पर्वणि क्वापि, सज्जीभूते च भोजने । श्वश्र्वामन्यत्र जग्मुष्या-

रात्, सप्तवर्षाणि कुम्भकृत् ॥ १८ ॥ ततस्ते चिन्तयामासु-र्निष्फलोपक्रमाः सदा । ग्रामाय कुपितः कोऽपि, प्रज्वा-
लयति नः कणान् ॥ १९ ॥ यद्यसौ ज्ञायते कापि, सोऽस्माभिः क्षम्यते तदा । अन्यथा कृतमप्येतत्, कर्षणं भावि
निष्फलम् ॥ २० ॥ इति निश्चित्य तैर्यक्ष-यात्रार्थं मिलिते जने । पटहोद्घोषणाऽकारि, निर्भीदानपुरस्सरम् ॥ २१ ॥
धान्यं दहति योऽस्माक-माविर्भवतु सोऽधुना । क्षमयामो यथा शीघ्रं, स्वमन्तुं यक्षसाक्षिकं ॥ २२ ॥ प्रजापति-
र्निशम्येति, कृत्वा वेषविपर्ययम् । श्लोकमेनं पपाठोच्चै-र्वैरोपशमहेतवे ॥ २३ ॥ अर्प्यतां तस्य सोऽनड्वान्, कुला-
लस्य द्विरुक्तिकाः । नोचेदन्यामसौ सप्त-वर्षीं धान्यानि धक्ष्यति ॥ २४ ॥ पुनर्दाहभयाच्छीघ्र-मनुनीय प्रजापतिम् ।
धौरेयमर्पयित्वा च, क्षमयामासुराशु ते ॥ २५ ॥ अज्ञानवन्तो यदि तेऽपि लोकाः, सर्वं सहन्ते स्म कुलालमन्तुम् ।
विवेकवद्भिस्तदहो ! स्वधर्म-रक्षार्थमागः कथमस्त्वसह्यम् ॥ २६ ॥ यथा च चौरैः क्षमितः स कुम्भकृत्, कृतादरैः
स्वार्थकृते चिरादपि । तथैव भव्यैर्निजपुण्यपुष्टये, क्षम्यो लघीयानपि सर्वशक्तितः ॥ २७ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे द्वितीय उपदेशः ॥ २ ॥

---

तेष्वप्यसौ क्रोधदवानलोऽङ्गिनां, प्रज्वालयत्यद्भुतपुण्यकाननम् ।
आसेवितो यः स्वपरोपतापकृत्, भवेदिहामुत्र च सूरविप्रवत् ॥ १ ॥

मम्बिकैव गृहेऽभवत् ॥ ५ ॥ तत्र चावसरे प्रासौ, साधू तैरशनादिभिः । पुण्यवत्या तया स्वैरं, सभक्तिप्रतिलाभितौ ॥ ६ ॥ यतः—

उत्तमपत्तं साहू, मज्झिमपत्तं तु सावया भणिया । अविरयसम्मद्दिट्ठि, जहन्नपत्तं मुणेयव्वं ॥ १ ॥

गलद्रसं मधूकं दृष्ट्वा भोजं प्रति धनपालोक्तिरपि यथा—

यदास्ति पात्रं न तदास्ति वित्तं,यदास्ति वित्तं न तदास्ति पात्रम्। एवं हि चिन्तापतितो मधूको,मन्येऽश्रुपातै रुदनं करोति१

महुअदुमोवि हु रोयइ, फलोदएणावि पत्तरहिएण । नूणं अभव्वजीवा, दाणावसरं न पावंति ॥ १ ॥

पत्तसरीरा जे फलइं, संहीयते[1] सुंदरचूअ । पत्त विहूणा जे फलइं, ते अ महू अमहू अ ॥ २ ॥

आगच्छन्त्येव सा श्वश्रू–स्तद्वृत्तं ज्ञापिता रयात् । कयाचित्प्रातिवेश्मिक्या, रुष्टा चुक्रोश तामिति ॥ ७ ॥ किमकारि त्वया पापे !, गृहमभ्यादितं मम । विनाशितानि धान्यानि, तदरे ! याहि मद्गृहात् ॥ ८ ॥ एवं तयाऽम्बिकाक्रुष्टा, लात्वा पुत्रौ च तौ लघू । प्रच्छन्नं निर्ययौ गेहा–न्मरणे कृतनिश्चया ॥ ९ ॥ उज्जयन्तपतिश्रीम–न्नेमिध्याननिबद्धधीः । पिपासिताभ्यां पुत्राभ्या–मियं नीरमयाच्यत ॥ १० ॥ भूमिं विदार्य पादाभ्यां, नीरमाकृष्य निर्म्मलम् । पुत्रौ पायितवत्येषा, निजशीलानुभावतः ॥११॥ एवं बुभुक्षितावेतौ, शीलस्यैव प्रभावतः । निष्पाद्य फलितं चूतं, सुहितौ

---

१ सखीयते ॥

रिदं जगौ । स्थानस्यैतस्य चेद्धूलि-र्भवद्भिः परिगृह्यते ॥ १८ ॥ तदा नीरोगता च स्या-दित्युक्ते ते तथा व्यधुः । आर्त्ताः किं किं न कुर्वन्ति, स्वकार्यैकपरायणाः ॥ १९ ॥ तया धूल्या च सर्वेषां, शिरोर्त्तिर्विलयं गता । अन्येऽपि दुष्टकुष्टाद्या, निर्विलम्बं क्षयं गताः ॥ २० ॥ तेषां तस्याः प्रभावेण, पुत्रपौत्रादिसन्ततिः । लक्ष्मीशान्तिकमाङ्गल्य-प्रमुखान्यपि जज्ञिरे ॥ २१ ॥ ततश्च ब्राह्मणाः लोभ-लुब्धास्तं जगृहुस्तथा । यथा गर्त्ताभवत्तत्र, कालेन कियता क्रमात् ॥ २२ ॥ एवं सा हेमगर्त्ताऽभू-द्विपरीतं कुतो द्विजाः ! । प्ररूप्यते विचारोऽपि, हृदि किं न विधीयते ॥२३॥ येषां गुरूणां माहात्म्या-दमावस्यापि पूर्णिमा । अभूत्प्रभूतभाग्यानां, तेषां निन्दां करोति कः ॥ २४ ॥ बाल्येऽपि येषां हस्तस्य, स्पर्शमात्रादपि क्षणात् । व्यवहारिगृहेऽङ्गार-राशिः स्वर्णमयोऽजनि ॥ २५ ॥ तदा च तेषां सञ्जाता, हेमचन्द्राऽभिधा वराः । कारितं तेन तेषां च, श्रीसूरिपदमुत्तमम् ॥ २६ ॥ तस्माद्विचार्य हृदये, विधेयो गुणिनां स्तवः । न तेषु मत्सरः कार्यो, नरैः स्वहितमिच्छुभिः ॥ २७ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारेऽष्टम उपदेशः ॥ ८ ॥

---

लोकोत्तरा कापि वचःकला भवे-न्नृणां प्रभूते सति भाग्यवैभवे ।
वाग्मी कुरूपोऽपि नृपादिभिर्यतो, मान्यो भवेद्वामरदूतवत्पुमान् ॥ १ ॥

विदधेतमाम् ॥ १२ ॥ अथ प्राप्तोगृहे सोम–भट्टोऽपि ब्राह्मणाग्रणीः। भार्यामपश्यन्नप्राक्षी–न्मातरं सा गता क्व तु ?॥ १३ ॥ सदौर्मनस्यं साप्याह, तत्स्वरूपं च मूलतः। उद्घाट्यालोकते याव–दन्नभाण्डानि स द्विजः ॥ १४ ॥ तावत्तान्यन्नपूर्णानि, वीक्ष्य विस्मितमानसः। सानुतापः क्षणादानु–पदिकोऽभूत्तदऽध्वना ॥ १५ ॥ क्वेदं कलत्ररत्नं मे, भावीति विमृशन्मुहुः। त्वरितत्वरितं गच्छं–स्तामपश्यत् प्रियां पुरः ॥ १६ ॥ यावदाह्वयते गाढ–शब्दैर्मा याहि हे प्रिये !। न ते किञ्चित्करिष्यामि, विरूपमिति भाषिते ॥ १७ ॥ अम्बिकापि तमायान्तं, वीक्ष्य विश्वासदुष्टधीः। कदर्थयित्वा मामेष, मारयिष्यत्यसंशयम् ॥ १८ ॥ चिन्तयन्तीति निर्माय, शरणं नेमिनं जिनम्। पपात कूपे सौत्सुक्य–मादाय तनयावपि ॥ १९ ॥ भट्टोऽपि किमिदं देवि !, त्वया पामरचेष्टितम्। कृतमित्युच्चरन् भूय–स्तत्रैव पतितः क्षणात् ॥ २० ॥ श्रीनेमिशासने रक्षा–कारिणी विघ्नवारिणी। अम्बिका व्यन्तरी जाता, भट्टस्तस्यास्तु वाहनम् ॥ २१ ॥ तस्या निदेशतस्तस्मिन्, सिंहरूपविधायिनि। आरूढा क्रीडति स्वैरं, शिरस्थजिनमूर्तियुक् ॥ २२ ॥ बहुश्रुतेभ्य आकर्ण्य, किञ्चिद्दृष्ट्वा च किञ्चन। प्रबन्धादौ मयाऽलेखि, सम्बन्धोऽयं प्रबोधकृत् ॥ २३ ॥ एवं जिनध्यानपरायणायाः, श्रीअम्बिकाया अवधार्य वृत्तं। भो भव्यलोकाः विलसद्विवेकाः !, सदा जिनध्यानपरा भवन्तु ॥ २४ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे सम्यक्त्वोपरि तृतीय उपदेशः ॥ ३ ॥

---

१ "तराम्" इत्यपि ॥

किमिदं शिरोधुतं ?, सगौरवं तां प्रति वासवोऽप्यवक् ॥ ३ ॥ करोत्ययोध्यापुरि राज्यमूर्जितं, सुश्रावकः सूर्ययशा नरे-
श्वरः । दृष्ट्वा तदीयां व्रतनिश्चलात्मतां, मया शिरोऽकम्प्यत पङ्कजानने ! ॥ ४ ॥ श्रुत्वेति सा प्राह मनुष्यमात्रे,
स्तुतिं कथं नाथ ! वृथा करोषि ? । यः सप्तधातुप्रतिबद्धमन्न-पिण्डेन पुष्टं च वपुर्बिभर्त्ति ॥ ५ ॥ स चेत् परीक्षां
क्षमते मया कृतां, तदा त्वदुक्तं घटते वृथाऽन्यथा । प्रोच्येत्ययोध्यापुरि रम्भया समं, जगाम सा तस्य परीक्षणोत्सुका
॥ ६ ॥ विधाय वीणां निजपाणिपङ्कजे, शक्रावताराभिधदेवमन्दिरे । आगत्य ते द्वे अपि गीतनर्त्तना-ऽऽदिकं विधत्तां
जनमोहकारकम् ॥ ७ ॥ तदा समीपद्रुमगा विहङ्गमाः, भुजङ्गगोधाहरिणादयोऽपि च । तन्नादलीना लिखिता इवाऽ-
स्मसु, स्थितास्तदैकाग्र्यरता निरेजनाः ॥ ८ ॥ इतश्च तस्मिन् पथि स व्रजन् नृपो-ऽश्रौषीत्तयोर्गीतरवान्मनोहरान् ।
सद्योऽभवत्कीलितवच्च तच्छ्रुतेः, कस्याऽथवा गीतरवा न मोहकाः ॥ ९ ॥ किमुच्यतेऽन्यद्द्रुतु गन्तुमक्षमा, तदाऽश्वप-
त्तिप्रमुखा चमूरपि । तदाभवत्तन्मयतां गता सती, तत्तादृशं वीक्ष्य चमत्कृतो नृपः ॥ १० ॥ कार्यद्वयं भावि ममेति
बुद्ध्या, तन्मोहितः प्राविशदेष चैत्यम् । स्तुत्वा युगादीशजिनं च तत्र, बलानकेऽथोपविवेश भूपः ॥ ११ ॥ तयोर्वचः-
सौधरसं श्रवःपुटैः, पिबन् वपूरूपरमां च लोचनैः । निभालयंश्चेतसि बुद्धवान् वरं, पुमर्थमेकं तु तृतीयमेव सः
॥ १२ ॥ कुलादिकं ज्ञातुममात्यमादिश-त्तयोर्नृपः सोऽपि ययौ तदन्तिके । एवं च पप्रच्छ कुतः समागते ?, युवां
कुलं नाम च किं ? निवेद्यताम् ॥ १३ ॥ एका तयोर्मन्त्रिणमित्यवादी-द्दावां सुते श्रीमणिचूडनाम्नः । विद्याधरेन्द्रस्य

दुःखिनोऽपि न परित्यजन्ति ये, श्रीजिनार्चनविधावभिग्रहम् ।
धर्म्मकर्म्मणि रताः सुखान्विता–स्ते भवन्ति धनदः पुरा यथा ॥ १ ॥

पुरा शङ्खपुरे श्रेष्ठी, धनदो धनदोपमः । आसीन्नरपतेर्मान्यः, पात्रमुद्दामसम्पदाम् ॥ १ ॥ क्रमात्तस्याऽभवन्पुत्रा–श्चत्वारश्चतुराशयाः । त्रिवर्गाराधनप्राप्त–सर्वाङ्गीणमहोदयाः ॥ २ ॥ न्यायोपात्तानि वित्तानि, सफलीकर्त्तुमुद्यतः । तत्राकारयदुत्तुङ्गं, स श्रेष्ठी जिनमन्दिरम् ॥ ३ ॥ कुटुम्बभारमारोप्य, सुतेषु वितनोत्ययम् । त्रिःपूजाद्विःप्रतिक्रान्ति–प्रमुखं धर्म्ममार्हतम् ॥ ४ ॥ अथाभाग्यवशादस्य, वित्तं तुत्रोट मन्दिरे । न पुनर्जिनधर्म्मस्य, लवोऽपि हृदयान्तरे ॥ ५ ॥ तुच्छप्रकृतयः पुत्राः, किन्तु धर्म्मावहीलनाम् । कुर्वाणाः पितरं प्राहु–र्धर्म्मादेव धनं गतम् ॥ ६ ॥ पिता प्राह न वत्साः ! भो, वचनं वाच्यमीदृशम् । लोकेऽपि श्रूयते येन, यतो धर्म्मस्ततो जयः ॥ ७ ॥ ततो निर्द्रव्यता-दुःखी, मानम्लानिभिया क्वचित् । ययौ शाखापुरे तत्रा–प्येष धर्म्मं मुमोच न ॥ ८ ॥ गतागतं वितन्वानः, स्वप्रासादे प्रतिप्रगे । चिन्तां चकार पुत्राणां, चैत्यस्यानिच्छतामपि ॥ ९ ॥ चतुर्मासीदिनेऽन्येद्यु–स्तस्य चैत्येऽभ्युपेयुषः । मालिन्या ढौकितं पुष्प–चतुस्सरकमेकया ॥ १० ॥ वित्ताभावात्कथं गृह्णा–म्यहमेतत्तयापि सः । भापितः किमिदं वाच्यं, सर्वमेतत्तवैव यत् ॥ ११ ॥ त्वदीयकवलैरेव, वयं वृद्धिमुपागताः । त्वदपत्यसमा देव !, परकीयमिहास्ति

धान्यान्येव तदा जनैः । मील्यन्ते स्म यतः प्राणाः, नृणामन्नेषु निष्ठिताः ॥ १० ॥ अथोष्णकालेऽतिक्रान्ते, प्रवृत्तेऽपि
तपात्यये । उत्पश्ये सर्वलोकेऽपि, वारिदोऽभूदवारिदः ॥ ११ ॥ भृशं विव्यथिरे लोकाः, भाविदुर्भिक्षशङ्कया। धर्म्म-
कर्म्मव्यवस्था हि, स्यात्सुभिक्षाऽनुयायिनी ॥ १२ ॥ प्रासे तु श्रावणे मासे, द्वितीयादिवसेऽसिते । उत्तरस्यामभूदभ्रं,
लोकः सम्मुखमैयरुः ॥ १३ ॥ वाद्यानि वादयामासु–र्गीतनृत्यादि तेनिरे । आकृष्ट इव तद्भाग्यै–र्ववर्ष जलदस्तदा
॥१४॥ आख्यद्भूपो निमित्तज्ञं, त्वद्वचोऽद्य वृथाऽभवत् । तत्ते करोमि जिह्वाया–श्छेदं यत्तत्प्रलापिनः ॥ १५ ॥ देव !
किञ्चित्प्रतीक्षस्व, यावन्मिलति कोऽपि मे । ज्ञानी मुनिस्तदग्रे य–द्भवेच्छात्रार्थनिर्णयः ॥ १६ ॥ कृषिः कृषीवलैः
कर्त्तु–मारेभे मुदिताशयैः । क्षेत्रेषु बीजान्युप्तानि, सुपात्रेष्विव धार्मिकैः ॥ १७ ॥ अन्यवर्षीयनिष्पत्ते–र्निष्पत्तिर्द्वि-
गुणाऽभवत् । तस्मिन्वर्षे नृपोऽप्यासी–त्सपौरो बहुलर्द्धिकः ॥ १८ ॥ निवृत्ते कार्त्तिके मासे, हेमन्तसमयेऽन्यदा ।
आययुः केचिदाचार्याः, केवलज्ञानशालिनः ॥ १९ ॥ सदैवज्ञः सपौरस्ता–न्वन्दितुं नृपतिर्गतः । नैमित्तिकोक्त्यलीक-
त्व–हेतुं पप्रच्छ तं च सः ॥ २० ॥ अवोचन्सूरयो राजन् !, अत्रैव तव पत्तने । धनदत्त इति श्रेष्ठी, तस्य भार्या
धनेश्वरी ॥ २१ ॥ तयोरन्येद्युरुत्पन्नः, सुतः सर्वसुखावहः । यस्य प्रभावतो वृष्टो, मेघो युष्मादृशां मुदे ॥ २२ ॥ अयं
हि प्राग्भवे रङ्को, भिक्षावृत्तिरभूत् क्वचित् । दृष्ट्वाऽन्यदा मुनिं कश्चि–द्ववन्दे हर्षपूरितः ॥ २३ ॥ गृहाण नियमा-
न्कांश्चि–दिति तं संयतो जगौ । अन्यथाऽपि तवेदानीं, सम्पत्तिर्नास्ति तादृशी ॥ २४ ॥ ततस्तदन्तिके देवनत्या-

निःस्वद्विजः सुतोऽभवत् । श्रीपुञ्जनामा मिथ्यात्वि–जीवस्तल्लघुबान्धवः ॥ १७ ॥ कुले तत्र प्रसक्तौ तौ, रात्रिभुक्त्या-दिकर्म्मसु । न ज्ञातवन्तौ श्रीजैन–धर्म्मगन्धमपि क्वचित् ॥ १८ ॥ भद्रकत्रिदशोऽन्येद्यु–रुपयुक्तो रहस्तयोः । स्वस्वरूपप्राग्भव–ज्ञापनादि वितेनिवान् ॥ १९ ॥ प्रबुद्धाभ्यां ततस्ताभ्यां, रात्रिभोजननिश्चयः । तथैव प्रतिपन्नस्तौ, सुरेण च दृढीकृतौ ॥ २० ॥ यदुक्तम्—

पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति धीराः ॥ १ ॥

जनकादिप्रहृक्तेऽपि, सव्रते दृढयोस्तयोः । लङ्घनत्रितयं जातं, रात्रौ भुक्तिनिषेधने ॥ २१ ॥ तयोर्निश्चयमाहात्म्य–वृद्धयै तत्रत्यभूभुजः । विपक्षे तेन देवेन, महती जठरव्यथा ॥ २२ ॥ यथा यथा प्रतीकारः, क्रियतेऽस्य तथा तथा । अधिकं वर्द्धते व्याधि–र्वह्निज्वालेव सर्पिषा ॥ २३ ॥ किं कर्त्तव्यतया मूढे, राजवर्गे तदाऽखिले । बभूव दिव्या वागेवं, भो भो लोकाः ! निशम्यताम् ॥ २४ ॥ राज्ञोऽस्य निश्चयैकाग्र–श्रीपुञ्जस्य द्विजन्मनः । हस्तस्पर्शनमात्रेण, व्याधिर्यास्यति नान्यथा ॥ २५ ॥ कः पुञ्ज इति सर्वेषू–त्कर्णेष्वेकस्तदाऽवदत् । अस्ति निःस्वद्विजसुतः, पुञ्ज एको दृढव्रतः ॥ २६ ॥ कुटुम्बकलहाज्जाते, लङ्घनत्रितयेऽपि यः । अक्षुब्धः सुव्रते पुञ्जः, स एव खलु सम्भवी ॥ २७ ॥ इति सम्भावनामात्रे–ऽप्यनात्मबहुमानतः । आहूतः सचिवाद्यैः स, श्रीपुञ्जः सद्य आगतः ॥ २८ ॥ सोऽब्रवीचेद्दृढो मेऽस्ति, रात्रि-

ते, किञ्चिद्धर्म्मोद्यमं व्यधुः ॥ २६ ॥ तातोऽन्यदाऽवदद्वत्साः !, कोणेष्वेषु चतुर्ष्वपि । खनित्वाऽद्य विलोकध्वं, श्रीधर्म्मफलमुज्ज्वलम् ॥ २७ ॥ श्रुत्वेति तैस्तथा कृत्वा, स्वर्णरत्नौघपूरिताः । स्वपुण्यानीव मूर्त्तानि, स्वर्णकुम्भा निरीक्षिताः ॥ २८ ॥ सौवर्णकलशप्राप्ति-प्रीतास्तेऽपि ततो भृशम् । स्थिरचित्ताः प्रसन्नास्याः, श्रीधर्म्मं बहु मेनिरे ॥ २९ ॥ अथ पुत्रयुतः श्रेष्ठी, पुनः स्वं नगरं ययौ । प्रान्ते तु व्रतमादाय, क्रमात्सुगतिभागभूत् ॥ ३० ॥

एवं श्रीवीतरागस्य, पूजां कुरुत भो जनाः ! । यथा मोक्षसुखश्रीणां, यूयं भवथ भाजनम् ॥ ३१ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे पूजोपदेशश्चतुर्थः ॥ ४ ॥

---

अष्टप्रकारा मनुजा जिनार्चनां, सृजन्तु सिध्यन्ति यथाष्टसिद्धयः ।
सहोदरा अष्ट यथा महर्द्धय-श्छित्त्वाष्टकर्म्माणि शिवश्रियं श्रिताः ॥ १ ॥

विदेहे पुष्कलावत्यां, विजये पुण्डरीकिणी । पुरी पवित्रा तत्राऽस्ति, वरसेनाऽभिधो नृपः ॥ १ ॥ षट्खण्डमण्डितां पृथ्वीं, साधयित्वा भुजोर्जितैः । स चक्रवर्त्ती सञ्जातो, विक्रमी विनयी नयी ॥२ ॥ अन्यदा सुयशास्तत्र, तीर्थकृत्समवासरत् । चक्रवर्त्त्यपि तत्राऽगात्, श्रोतुं तद्देशनामिति ॥ ३ ॥ जागर्त्ति यावदिह कालभुजङ्गमो न, पञ्चाननः स्वपिति यावदयं च कामः । यावद्विवेकपिहितास्ति च मोहरात्रि-र्निर्गच्छ संसृतिवनान्निभृतोऽङ्ग तावत् ॥ ४ ॥

च्छवीन् । अक्षतानक्षतं सौख्य–मिच्छुर्देवाय ढौकते ॥ १८ ॥ चम्पकाशोकपुन्नाग–शतपत्राम्बुजादिकैः । गुञ्जद्विरेफैः पुष्पोघैः, पूजां पञ्चम आचरेत् ॥ १९ ॥ षष्ठस्तु वान्धवो दीपं, कुरुते घृतपूरितम् । निराकर्त्तुमिव स्वीयं, तमस्तोमस्य विस्तरम् ॥ २० ॥ नानाजातीयपक्वान्न–परमान्नादिढौकनैः । नित्यं कृतार्थमात्मानं, निर्मिमीते तु सप्तमः ॥ २१ ॥ वीजपूरकजम्बीर–पूगीफलपुरस्सराम् । नालिकेरफलैराढ्यां, फलालीं ढौकतेऽष्टमः ॥ २२ ॥ एवमेकैकभेदेन, मध्याह्नेऽष्टविधाममी । कुर्वन्तोऽर्चां स्वपरयोः, सम्यक्त्वं निश्चलं व्यधुः ॥ २३ ॥ अभिग्रहममुं तेषा, सर्वदाप्यनुतिष्ठताम् । पञ्चविंशतिलक्षाणि, पूर्वाणां व्यतिचक्रमुः ॥ २४ ॥ अथ मासावधि प्रान्ते–ऽनशनं प्रतिपाल्य ते । पूर्णायुष्काः सुरा यूयं, जाताः शुक्रसुरालये ॥ २५ ॥ ततश्च्युत्वा विदेहेषु, विजयेऽत्रैव भोः सुराः ! । भविष्यथ नृपा यूयं, प्रौढदोःस्थामशालिनः ॥ २६ ॥ तत्राप्यन्ते परिव्रज्या–मुपादाय गतस्पृहाः । अवाप्य केवलज्ञानं, यूयं यास्यथ निर्वृतिम् ॥ २७ ॥ श्रुत्वेति वरसेनाद्या, अष्टधार्चाभवं फलम् । मुहुर्मुहुः श्लाघमाना, जिनं नत्वा गृहं ययुः ॥ २८ ॥ इत्यष्टभेदपूजा–फलं निशम्य प्रमोदपूर्णहृदः । तत्रैव कुरुत यत्नं, यदि वो मुक्तिस्पृहा भवति ॥ २९ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे पञ्चम उपदेशः ॥ ५ ॥

---

भवन्ति पुंसां जिनपादवन्दना–ऽभिसन्धिमात्रादपि सौख्यसम्पदः ।
विवन्दिषुर्वीरजिनं स दर्दुरो–ऽप्यभून्महर्द्धिस्त्रिदशो यथा दिवि ॥ १ ॥

त्त्या दर्दुरः श्रुत्वा, वन्दितुं निर्ययौ ततः ॥ ११ ॥ अथ श्रेणिकभूपालः, श्रीवीरं नन्तुमुत्सुकः । चलन्परिवृतः सैन्यै–र्नगरान्निरगाद्बहिः ॥ १२ ॥ दर्दुरोऽपि चलन्मार्गे, नृपाश्वखुरमर्दितः । मृत्वा सौधर्म्मकल्पेऽभू–द्दर्दुराङ्काभिधः सुरः ॥ १३ ॥ सामानिकानां चत्वारः, सहस्रास्तस्य जज्ञिरे । सर्वं तदनुमानेन, ज्ञातव्यं सम्पदादिकम् ॥ १४ ॥ तत्राप्यवधिना ज्ञात्वा, वीरं वन्दितुमागतः । अतुच्छच्छविसम्भार–च्छादितापरदीधितिः ॥ १५ ॥ स्वस्वस्थाननिविष्टेषु, शक्रक्ष्मापादिषु प्रभुः । गिरा योजनगामिन्या, प्रारेभे धर्म्मदेशनाम् ॥ १६ ॥ स्थित्वा जिनान्तिकेऽन्येषां, कुष्ठिरूपं च दर्शयन् । व्यलिम्पत वपुर्जैनं, स दिव्यैश्चान्दनैः रसैः ॥ १७ ॥ श्रेणिकाद्यास्तु जानन्ति, कुष्ठी कोऽप्येष दुष्टधीः । आः! करोति स्वदेहोत्थ–रसिकाभिर्विलेपनम् ॥ १८ ॥ इतो वहिर्गतः पापी, श्रीजिनाशातनाकरः । मारणीयो मया नून–मिति दध्यौ नृपस्तदा ॥ १९ ॥ इतश्च स जिन १ क्ष्मापा २–ऽभय ३ शौकरिकान् ४ क्षुतम् । कृतपूर्विण उद्दिश्य, क्रमाद्वाक्यान्यमुन्यवक् ॥ २० ॥ सद्यो म्रियस्व १ जीव त्वं २, चिरं जीव म्रियस्व वा ३ । मा जीव मा म्रियस्वेति, ४, ततो रुष्टो भृशं नृपः ॥ २१ ॥ देशनान्ते क्षणात्तस्मिन्, विद्युदुद्द्योतवद्गते । अप्राक्षीद्भूपतिर्वीरं, कोऽयं कुष्ठी ? प्रभो ! वद ॥ २२ ॥ तवाप्याशातनामेवं, यश्चकार दुराशयः । एतावत्समुदायेऽपि, शीर्षच्छेद्यः स निश्चितम् ॥ २३ ॥ जिनोऽप्युवाच राजेन्द्र!, नाऽयमाशातनाकरः । चान्दनेन रसेनैष, किन्तु चक्रे विलेपनम् ॥२४॥ वाक्यानि यानि सोऽवादी–त्तद्भावार्थमपि प्रभुः । उवाच श्रेणिकादीनां, तत्सम्बन्धं च मूलतः ॥ २५ ॥ उक्तं च—

केसिं च वरं मरणं, जीवियमन्नेसिमुभयमन्नेसिं । दद्दुरदेविच्छाए, अहियं केसिंवि उभयंपि ॥ १ ॥

इतश्च्युत्वा विदेहेषु, मोक्षमेष गमिष्यति । श्रुत्वेति विस्मयोत्फुल्ला, लोकाः स्वस्वगृहं ययुः ॥ २६ ॥ जिनेशध्यानमात्रस्य, श्रुत्वेति फलमुत्तमम् । तत्रैव क्रियतां यत्नो, निर्वृतिर्वो भवेद्यथा ॥ २७ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे षष्ठ उपदेशः ॥ ६ ॥

---

अल्पापि पूजा विहिता जिनेशितुः, फलं महत्किं न तनोति देहिनाम् ?। कूष्माण्डवल्ली तनुकापि यच्छति, स्फारं फलं स्वाश्रितमानवेषु यत् ॥ १ ॥ गूर्जरत्राभुवि त्राता, कुमारः परमार्हतः । अत्र चौलुक्यभूपालो, दृष्टान्तः परिकीर्त्त्यते ॥ २ ॥

मालवान्तः क्वचित्पल्ल्या-मभूज्जैत्र इति श्रुतः । क्षत्रियः परलुण्टाक-चरटैः परिवारितः ॥ १ ॥ मुष्णात्यनेकशः सार्थान्, पुष्णाति व्यसनान्यपि । भद्रप्रकृतिरप्येष, चौरसंसर्गदूषितः ॥ २ ॥ अन्यदा जेसलो नाम, सार्थपः क्वापि पत्तने । गच्छन् कथञ्चिद्विज्ञात-श्चरटैस्तैः सुदुर्म्मदैः ॥ ३ ॥ परःशतवणिक्पुत्रै-र्व्यवसायार्थिभिर्युतः । सहस्रैर्दशभिः प्रौढ-पृष्टौहां च सवस्तुभिः ॥ ४ ॥ जैत्रस्तैश्चरटैः सर्वं, सार्थलोकमलुण्टयत् । सार्थपोऽप्युच्छलन्मन्युः, पुनः स्वं नगरं ययौ ॥ ५ ॥ तत्र विज्ञप्य राजानं, तस्यादाय बलं बहु । जघान पल्लीमागत्य, चरटानुत्कटानपि ॥ ६ ॥ जैत्रस्य तनयं बाल-मपि हत्वातिनिर्दयः । वालयित्वा निजं द्रव्यं, पुनः स्वं नगरं ययौ ॥ ७ ॥ बालहत्याविधायित्वा-त्तत्र

राज्ञा स तर्जितः । वैराग्यात्तापसीं दीक्षा–मादाय विदधे तपः ॥ ८ ॥ जैत्रोऽथ जीविताकाङ्क्षी, तदानीं सङ्कटात्ततः । नंष्ट्वा कथञ्चिदप्यागां–दुरङ्गबलपत्तने ॥ ९ ॥ तत्र निःशम्बलत्वेन, दुःखी दारिद्र्यपीडितः । तस्थौ कर्म्मकरत्वेन, ओढरव्यवहारिणः ॥ १० ॥ श्रीयशोभद्रसूरीणा–मुपदेशमनारतम् । श्रावं श्रावमसौ जज्ञे, सधर्म्मह्रदयो मनाक् ॥ ११ ॥ न हन्मि जन्तून्निर्मन्तू–न्न जल्पाम्यनृतं तथा । इत्याद्यभिग्रहांस्तस्य, पार्श्वे जग्राह स क्रमात् ॥ १२ ॥ अन्यदा वार्षिके पर्व–ण्योढरोऽभ्यर्चितुं जिनम् । जैत्रेण सार्द्धं सद्रसो, जगाम जिनमन्दिरे ॥ १३ ॥ तत्र पूजापरान्वस्त्रा–भरणाद्यैरलङ्कृतान् । लोकानालोक्य जैत्रोऽपि, मनस्येवमचिन्तयत् ॥ १४ ॥ अहो ! प्राक्पुण्ययोगेन, भवेऽत्र सुभगा अमी । आगाम्यपि भवो ह्येषां, भावी भद्रङ्करः खलु ॥ १५ ॥ माघऽप्येवमुच्यते—

हरत्यघं सम्प्रति हेतुरेष्यतः, शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं, व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ १ ॥

विष्णुं प्रति नारदोक्तिः—

जिनेन्द्रमहमप्याशु, पूजयामि ततो ध्रुवम् । यतो जिनेन्द्रपूजैव, प्रतिभूः सर्वसम्पदाम् ॥ १ ॥

विमृश्येति पुरा द्यूत–जितैर्नवकपर्दकैः । आत्मीयैरेव पुष्पाणि, गृहीत्वाऽर्चितवान् जिनान् ॥ १६ ॥ शुभाभिसन्धिपूता-

१ "–गाद् दूरमचलपत्तने" इत्यपि ॥

अज्ञानभावादपि पूजितो जिनो, विश्राणयत्यात्मपदं नृणां यतः ।
अरण्यमध्यस्थितबिम्बपूजकः, स देवपालोऽपि हि मुक्तिमाप्तवान् ॥ १ ॥

कस्यचिच्छ्रेष्ठिनो भृत्यो, देवपालोऽन्यदा वने । चारयन्महिषीरर्ह–द्बिम्बमेकं व्यलोकत ॥ १ ॥ अजानन्नपि तत्त्वं, समीपतटिनीजलैः । प्रक्षाल्य पूजयामास, तद्बिम्बं कुसुमादिभिः ॥ २ ॥ अपूजितेऽस्मिन्न मया, भोक्तव्यमिति निश्चयम् । कृत्वा समाधिसम्पन्नो, गमयामास वासरान् ॥ ३ ॥ वर्षारम्भेऽन्यदा नद्यां, दूरे जातेऽतिदुस्तरे । तस्थौ गेहे तदेकाग्र–स्तत्र गन्तुमशक्नुवन् ॥ ४ ॥ अस्मद्गेहेऽपि बिम्बानि, सन्ति तान्येव पूजय । श्रेष्ठिनेत्युच्यमानोऽपि, न भुङ्क्ते स्म स कर्मकृत् ॥ ५ ॥ अथ सप्तदिनप्रान्ते, नदीपूरेऽपसर्पिते । यावद्बिम्बान्तिके याति, तावत्सिंहं ददर्श सः ॥ ६ ॥ तं भयङ्करमप्येषो–ऽवगणय्य शृगालवत् । तं देवं पूजयामास, किं न सिध्यति सत्त्वतः ? ॥ ७ ॥ तन्निश्चयेन सन्तुष्ट–स्तदधिष्ठायकः सुरः । प्राप्तः प्रत्यक्षतां प्राह, वरं वृणु महाशय ! ॥ ८ ॥ देवपालोऽभ्यधाद्राज्यं, मह्यं देहि सुरोऽब्रवीत् । सप्तमे दिवसे राज्यं, तव भावि न संशयः ॥ ९ ॥ तत्रैवाऽवसरे राजा, निष्पुत्रो मृतिमाप्तवान् । प्रधानैः पञ्चदिव्यानि, प्रकट्यन्ते स्म तत्क्षणात् ॥ १० ॥ सुरोक्तदिवसे तस्य, प्रसुप्तस्य तरोस्तले । आगत्य तानि दिव्यानि, राज्यं प्राज्यमहं ददुः ॥ ११ ॥ साम्राज्ये तस्य जातेऽपि, केचनाज्ञां न मन्वते । कुर्वते प्रत्युतावज्ञां, नूनं कर्मकरो ह्यसौ ॥ १२ ॥ देवपालोऽपि तं देव–मुपेत्येति व्यजिज्ञपत् । अलमेतेन राज्येन, वरं भृत्यत्वमेव मे ॥ १३ ॥ देवो-

ऽभ्यधात्कुम्भकार–पार्श्वान्मृन्मयहस्तिनम् । कारयित्वा तमारुह्य, व्रजेस्त्वं राजपाटिकाम् ॥ १४ ॥ एवं कृते तवावज्ञा, भाविनी न मनागपि। देवपालस्तथा चक्रे, सर्वत्राज्ञा ततोऽभवत् ॥ १५ ॥ अस्थापयच्च तद्बिम्बं, प्रासादे निजकारिते । प्राचीननृपतेः पुत्री, तस्य भार्या बभूवुपी ॥ १६ ॥ पुराद्बहिः स्थितं कश्चि–द्वृद्धं वीक्ष्यान्यदा तु सा । गवाक्षस्था गता मूर्च्छां, पश्यतोऽपि क्षमापतेः ॥ १७ ॥ आलापयत्सचैतन्यां, पुनस्तां मेदिनीश्वरः । सापि तं वृद्धमाकार्य, स्वस्वरूपं जगाविति ॥ १८ ॥ अहमेतस्य वृद्धस्या–भवं प्राच्यभवे प्रिया । एतद्बिम्बार्चया देव !, त्वत्प्रियात्र भवेऽभवम् ॥ १९ ॥ बहूक्तेऽपि मया नैष, देवं पूजितवान्विभो ! । तादृश्येवास्य तेनेय–मवस्थाद्यापि दृश्यते ॥ २० ॥ यदुक्तम्—

अडविहिं पत्ती नई, जल होइ नवूढा हत्थ । अज्जो एह कवाडीइं, अज्जवि सा जिअ वत्थ ॥ १ ॥

प्रत्यभिज्ञाय तां तैस्तै–रभिज्ञानैर्निजां प्रियाम् । वृद्धोऽपि देवपूजादि–धर्मकार्यरतोऽभवत् ॥ २१ ॥ देवपालनरेन्द्रोऽपि, स्वप्रासादे पुरीजनैः । नित्यं प्रवर्त्तयामास, ध्वजपूजादिकोत्सवान् ॥ २२ ॥ पालयित्वा चिरं राज्यं, प्रान्ते व्रतपवित्रितः । तया च भार्यया युक्तः, स भूपः प्राप निर्वृतिम् ॥ २३ ॥ श्रुत्वेति रङ्कमात्रेऽपि, तादृक् साम्राज्यवैभवम् । श्रीजिनेन्द्रस्य पूजायां, कः स्यान्मन्दादरः पुमान् ? ॥ २४ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारेऽष्टम उपदेशः ॥ ८ ॥

जिनेन्द्रचन्द्रप्रतिमा तरीयते, निमज्जतां प्राणभृतां भवाम्बुधौ ।
तद्दर्शनादेव यतः प्रपन्नवान्, शय्यंभवः सूरिवरः सुदर्शनम् ॥ १ ॥

श्रीजम्बूस्वामिनः शिष्यः, प्रभवस्वामिनोऽन्यदा । गच्छे सङ्घे च शिष्यार्थ–मुपयोगं वितेनिरे ॥ १ ॥ तथाविधसुपात्रस्य, तस्मिन्ननुपलब्धितः । ददुस्तदुपयोगं ते, परकीयेऽपि दर्शने ॥ २ ॥ तदा शय्यंभवं भट्टं, यज्ञनिर्म्मापणोद्यतम् । पुरे राजगृहेऽद्राक्षुः, श्रुतज्ञानोपयोगतः ॥ ३ ॥ सर्वविद्यागुणोपेतं, योग्यं तमवधार्य ते । प्राहिण्वन् शिक्षयित्वा [1]स्वं, साधुयुग्मं तदन्तिके ॥ ४ ॥ ताभ्यां शय्यंभवोऽश्रावि, तत्र श्लोकार्द्धमीदृशम् । अहो ! कष्टमहो ! कष्टं, तत्त्वं न ज्ञायते पुनः ॥ ५ ॥ तयोरिति वचः श्रुत्वा, दध्यौ भट्टोऽपि विस्मितः । नूनमेतौ महात्मानौ, जातु नासत्यवादिनौ ॥ ६ ॥ तत्किमप्यत्र यत्तत्त्वं, तन्न विद्मो जडा वयम् । ततः पप्रच्छ यज्वानं, सोऽप्येवं तमभापत ॥ ७ ॥ प्रष्टव्यमत्र किं नाम, यज्ञादेव यदात्मनाम् । रोगशान्तिः प्रजालाभो, विघ्नध्वंसश्च निश्चितम् ॥ ८ ॥ अश्रद्दधानस्तद्वाचं, खड्गमुत्पाट्य सोऽवदत् । करिष्ये त्वच्छिरश्छेदं, नोचेत्सत्यं वचो वद ॥ ९ ॥ तत्त्वं वाच्यं शिरश्छेदे, इति वेदवचः स्मरन् । यज्वा जगाद भो भट्ट !, योऽयमध्वरकीलकः ॥ १० ॥ तस्याधोभागभूम्यन्त–र्निहिता प्रतिमार्हतः । विद्यते तत्प्रभावेण, क्षीयते विघ्नसन्ततिः ॥ ११ ॥ वैतालव्यन्तरप्रेत–शाकिनीराक्षसादयः । अवश्यमध्वरं घ्नन्ति,

१ "अधमा अ–" इत्यपि ॥

इति वेदपूराणोक्ताः, श्रुत्वा शुक्तीरनेकशः । सम्यक्त्वं प्राप्य मिथ्यात्वं, विषवत्त्यक्तवानसौ ॥ २० ॥ तदैवोत्पन्न-
वैराग्यः, संसारासारतां विदन् । साधानां गृहिणीं मुक्त्वा, तत्पार्श्वे व्रतमग्रहीत् ॥ २१ ॥ अधीत्य सर्वपूर्वाणि,
प्राप्ताचार्यपदः क्रमात् । श्रीमान् शय्यंभवः सूरि-र्विजहार महीतले ॥ २२ ॥ मनकं तनुकायुष्कं, ज्ञात्वा प्रव्राज्य
च प्रभुः । दशवैकालिकग्रन्थं, स्वकृतं योऽध्यजीगपत् ॥ २३ ॥ इति भूरितरं कालं, प्रबोध्य भविकव्रजम् । वीराद-
ब्दाङ्क ९८ संख्येऽब्दे, स स्वःसाम्राज्यमन्वभूत् ॥ २४ ॥ एवं जिनेन्द्रप्रतिमापि शुद्ध-प्रबोधहेतुर्भवतीति विज्ञाः । विज्ञाय
तामेव यजन्तु येन, सृजेत् स्पृहां निर्वृतिकामिनी वः ॥ २५ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे नवम उपदेशः ॥ ९ ॥

---

गतानुगत्यापि विधीयमाना, पूजा परां सम्पदमादधाति ।
चटत्प्रकर्षां प्रतिजन्म लक्ष्मीं, यथाऽऽप्य कीरोऽपि बभूव चक्री ॥ १ ॥

वैताढ्यपर्वतोद्याने, क्वचिद्देवकुले वरे । अस्ति विद्याधरैः पूज्या, प्रतिमा काचिदार्हती ॥ १ ॥ तथाविधां च तां
दृष्ट्वा, कीरयोर्युग्ममन्यदा । आरण्यैः पत्रपुष्पाद्यैः, शुभभावमपूजयत् ॥ २ ॥ इति भूरितरं कालं, सम्यक्त्वं प्राप्य
पूजया । अभूतां प्रथमे कल्पे, सुभगौ सुरदम्पती ॥ ३ ॥ इतश्च रमणीयाख्ये, विजये जनसङ्कुले । श्रीमन्दिरे पुरे

राजा, नरशेखरसंज्ञकः ॥ ४ ॥ प्रिया कीर्त्तिमती तस्य, कीरजीवस्ततश्च्युतः । अभूत्तदीयस्तनयो, नाम्ना तु मणिकुण्डलः ॥ ५ ॥ नगर्यां विजयावत्यां, तत्रैव विजये तदा । रत्नचूडः क्षमापालो, महादेवी तु तत्प्रिया ॥ ६ ॥ कीरीजीवस्तयोः पुत्री, पुरन्दरजसेत्यभूत् । चित्रपट्टेऽन्यदा तस्याः, कुमारो रूपमैक्षत ॥ ७ ॥ प्राचीनभवसम्बन्धात्, गाढव्यामूढमानसः । तामुत्सवैर्पितृभ्यां स, प्रेमतः पर्यणाय्यत ॥ ८ ॥ तौ तत्रापि भवे प्रीतौ, चिरं गार्हस्थ्यधारिणौ । प्रान्ते तु व्रतमादाय, स्वर्गं जग्मतुरश्रमम् ॥ ९ ॥ मणिकुण्डलजीवस्तु, च्युत्वा तस्मात्सुरालयात् । विजयेऽथ महाकच्छे, विजयादिपुरे वरे ॥ १० ॥ महासेननृपस्यासी–ल्ललिताङ्गाभिधः सुतः । तत्रैव विजया रम्या, पुरी परमभूषणा ॥ ११ ॥ पुरन्दरजसाजीवः, पूर्णकेतुनरेशितुः । तत्र पुत्री समुत्पन्ना, नाम्ना कमललोचना ॥ १२ ॥ मनोऽभिमतभर्त्तारं, सा वरीतुं समुत्सुका । प्रतिज्ञामेवमाधत्त, व्यक्तां सर्वसखीपुरः ॥ १३ ॥ ज्योतिर्विद्या नभोगामि–विमानरचनापि च । राधावेधकला सर्प–विपनिग्रहणं तथा ॥ १४ ॥ एतेष्वेकतमेनापि, प्रकारेणापि योऽधिकः । भर्त्तारं तं करिष्येह–मन्यथा वह्निरस्तु मे ॥ १५ ॥ अथ प्रतिज्ञामेतस्याः, श्रुत्वा सोत्साहमानसाः । राजन्यास्तनयास्तत्तत्कलाभ्यासं वितेनिरे ॥ १६ ॥ अथ स्वयंवरे तस्याः, प्रारब्धे समहोत्सवम् । ललिताङ्गमुखास्तत्र, कुमारा उपतस्थिरे ॥ १७ ॥ राधावेधे कुमारेण, साधिते सा नृपाङ्गजा । वरमालां गले तस्य, यावत्क्षिप्स्यति सम्मदात् ॥ १८ ॥ तावत्केनाप्यपाहारि, कन्यका खेचरेण सा । ज्योतिर्बलेन केनापि, तन्मार्गोऽथ निरूपितः ॥ १९ ॥ आकाशगासुकं

कश्चि-द्विमानं च विनिर्ममे । ललिताङ्गादयस्तेन, तस्याः पृष्ठे दधाविरे ॥ २० ॥ खेचरस्तैरधिक्षिप्तः, कन्यां तां विजने क्वचित् । विमुच्य योद्धुमारेभे, हतस्तावदयं च तैः ॥ २१ ॥ यावत्कन्यान्तिके गत्वा, विमाने तां क्षिपन्ति ते । तावत्सर्पेण सा दष्टा, वैषम्यं कर्म्मणां हहा ! ॥ २२ ॥ ततः शिक्षितविद्येन, तन्मध्यस्थनरेण सा । केनापि जीविता सर्वे, तामादाय ततोऽचलन् ॥ २३ ॥ कुर्वन्ति कलहं मार्गे, गच्छन्तस्ते पुरं प्रति । इयं ममैव भवित्े-त्येवं प्रेमनियन्त्रिताः ॥ २४ ॥ अथ तत्र पुरे प्राप्ताः, विवदन्ते तथैव ते । भूपश्चिन्तातुरः प्राह, मन्त्रिणं किं करिष्यते ?॥ २५ ॥ सोऽपि बुद्धिमतां धुर्यः, पप्रच्छ विजने कनीम् । अमीषां रोचते मध्ये, कस्तुभ्यमिति मे वद ॥ २६ ॥ ललिताङ्गो ममाभीष्टो, मन्त्री श्रुत्वेति तद्वचः । अकारयत्पुरीबाह्य-प्रदेशे महतीं चिताम् ॥ २७ ॥ आकार्य राजपुत्रांस्तान्, बभाषे मन्त्रिपुङ्गवः । मन्यध्वं किं न भो भद्राः !, ज्वलिष्यत्यन्यथा कनी ॥ २८ ॥ मिथो मात्सर्यसंसक्त-मानसैस्तैरमानिते । चितायामविशत्कन्या, ललिताङ्गोऽपि पृष्ठतः ॥ २९ ॥ अपरे तु त्रयस्तुच्छ-स्नेहास्तत्रैव संस्थिताः । हाहाकारपरो लोको, मिथः कोलाहलं व्यधात् ॥ ३० ॥ तावन्मन्त्रिनियुक्तेन !, नरेण प्रकटीकृतम् । चिताधस्तनभूभागे, सुरङ्गाविवरं रयात् ॥ ३१ ॥ प्रविश्य तद्युगं तत्र, ययौ मन्त्रिगृहे पुनः । प्रच्छन्नं कुरुते तत्र, स्नानपानादिकाः क्रियाः ॥ ३२ ॥ राजपुत्रास्त्रयस्ते तु, किञ्चित्सानुशयाशयाः । साहसं ललिताङ्गस्य, प्रशंसन्ति पदे पदे ॥ ३३ ॥ मन्त्रिणा ते पुनः पृष्टाः, युगलं तत्कदाचन । प्राप्नोति जीवितव्यं चेत्, ततस्तत्परिणाय्यते ॥ ३४ ॥ तेऽप्यूचुरत्र का

पृच्छा ?, विवादं न वयं पुनः । करिष्याम इहार्थे तु, साक्षी सर्वोऽपि पुर्जनः ॥ ३५ ॥ प्रादुरासीत्ततो मन्त्रि-वाक्या-
त्तद्युगलं पुनः । पितृभ्यां च तयोस्तेने, पाणिग्रहमहोत्सवः ॥ ३६ ॥ तां पङ्कजाक्षीमादाय, ललिताङ्गः पुरे निजे ।
जगाम सुखमक्षामं, बुभुजे च तया समम् ॥ ३७ ॥ तौ तत्रापि भवे प्रीतौ, दिवं प्रव्रज्य जग्मतुः । एवं तयोः प्रति-
भवं, सुखाद्वैतमजायत ॥ ३८ ॥ दशमेऽथ भवे कीर-जीवः पीवरपुण्यवान् । विदेहे पुण्डरीकिण्यां, चक्रवर्त्ती बभूव
सः ॥ ३९ ॥ कीरीजीवः पुनस्तस्य, मन्त्री मैत्रीपवित्रितः । चिरं राज्यसुखान्येतौ, स्नेहादनुबभूवतुः ॥ ४० ॥ प्रान्ते
प्राच्यभवान् ज्ञानि-पार्श्वे विज्ञातपूर्विणौ । प्रव्रज्य केवलज्ञान-मवाप्य च शिवं गतौ ॥ ४१ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे दशम उपदेशः ॥ १० ॥

क्रोधोदयेऽप्यर्हति पूज्यमाने, भवेत्सुबोधिः सुलभो नराणाम् ।
दृष्टान्तमत्र प्रकटं वदन्ति, तं वामनं श्रेष्ठिवरं कवीन्द्राः ॥ १ ॥

नगर्यां वामनस्थल्या, वामनः श्रेष्ठिपुङ्गवः । अभूत्कोटीध्वजः किन्तु, प्रकृत्येर्ष्यालुरुद्धतः ॥ १ ॥ प्रासादं पुण्य-
शालां च, निर्माप्य स्वगृहान्तिके । धर्मकर्म करोत्येष, लक्ष्मीफलमिदं खलु ॥ २ ॥ रत्नस्वर्णप्रवालादि-वस्तूनां तस्य
पेटिकाः । अब्धिद्विप ८४ मिताः सन्ति, कुञ्चिकातालकैर्युताः ॥ ३ ॥ निरुद्यमा निरुत्साहाः, व्यवसायादिकर्म्मसु ।
दुर्विनीताः पशुप्राया-श्चत्वारस्तस्य नन्दनाः ॥ ४ ॥ कदाचित्तालकं दत्वा, मूर्खास्तत्रैव कुञ्चिकाम् । विस्मारयन्ति

श्रेष्ठी तु, निर्भर्त्सयति तान् भृशम् ॥ ५ ॥ परं किमपि तच्छिक्षा, सुतानां लालगीति न । दुःशिष्याणामिवासस्योपदेशः पुण्यपेशलः ॥ ६ ॥ संमुखं स्वपितुर्यत्तत्, ते हि जल्पन्ति दुर्धियः । कलहं कुर्वतां तेषा-मेवं गच्छन्ति वासराः ॥ ७ ॥ गच्छन् देवगृहेऽन्येद्युः, श्रेष्ठी पूजयितुं जिनान् । ग्रहीतुं चन्दनं यावत्, पेटामेकां विलोकते ॥ ८ ॥ प्राग्वद्विस्मारितास्ताव-त्कुञ्चिकास्तासु वीक्ष्य सः । अभूत्क्रोधोद्धतः ताम्र-लोचनः स्फुरदोष्ठकः ॥ ९ ॥ अहो ! सुतानां मूर्खत्व-महो ! हृदयशून्यता । पुनः पुनरिति ध्यायन्, क्रमाद्देवगृहं ययौ ॥ १० ॥ गृहे गत्वाऽद्य दुष्पुत्रां-स्तदहं मूर्खशेखरान् । नूनं निर्वासयिष्यामि, किमेभिः पापहेतुभिः ॥ ११ ॥

गयउं कडेवर देवहरि, मनमेल्हे विणु हट्टि । दुहलाहां एकू नही, सूनी हुई ससट्टि ॥ १ ॥

इत्यादि चिन्तयन्नेव, स देवाऽर्चां वितेनिवान् । परं पुत्रेषु दौरात्म्यं, न तत्याज सुधीरयम् ॥ १२ ॥ पूजाया अवसाने तु, कुर्वाणश्चैत्यवन्दनाम् । विधाय प्रणिधानं तु, भूमौ भालमलीलगत् ॥ १३ ॥ दैवयोगात्तथावस्थः, पञ्चत्वं प्रासवानसौ । प्राणिनां प्राणितव्यं हि, तरङ्गतरलं यतः ॥ १४ ॥ पुरे तत्रैव मृत्वाऽसौ, श्वपाकोऽभूदमुष्य तु । पूजानुभावान्मानुष्यं, दुर्ध्यानाच्च कुयोनिता ॥ १५ ॥ चण्डालस्य कुले सोऽथ । शैशवातिक्रमे क्रमात् । सम्प्राप्तयौवनः स्वीयं, कुटुम्बं परिपालयेत् ॥ १६ ॥ चौर्य्यव्यसनवानेष, क्रमाज्जातोऽतिदुष्टधीः । दुष्पूरोदरकार्ये हि, मूढाः किं किं

२ "स्ते तु यत्तत् ज-" "स्तेऽपि यत्तज्ज-" इत्यपि । २ "कुधीरयम्" इत्यपि ॥

न कुर्वते ?॥ १७ ॥ गृहे गृहे स चौर्यार्थं, स्वार्थाय विहितोद्यमः । प्रयाति परकीयाणि, द्रव्याणि जरिहर्त्ति च ॥१८॥ अन्यदा प्राग्भवावासं, स्तेयार्थं प्रविवेश सः । तादृग्गृहस्वरूपं च, दृष्ट्वा जातिस्मृतिं ययौ ॥ १९ ॥ अन्तःस्वान्त-समुद्भूत–क्रोधदष्टरदच्छदः । सुतान्वीक्ष्य स तादृक्षा–न्मनस्येवं विमृष्टवान् ॥ २० ॥ हाहा ! विनाशितं गेहं, वित्तं निर्गमितं मम । आलस्योपहतैरेतैः, साम्राज्यं कुनृपैरिव ॥ २१ ॥ शिक्षामिदानीमेतेषां, तथा कुर्वे यथा पुनः । नैवं-विधं वितन्वन्ती–त्यादि यावत्स चिन्तयेत् ॥ २२ ॥ तावज्जागरिताः पुत्राः, दृष्ट्वा चण्डालतस्करम् । रे दुष्ट ! कि-मिदं चक्रे, पापिष्ठानिष्टदर्शन ! ॥ २३ ॥ इत्यादि यत्तज्जल्पन्तः, प्रत्येकं ते चपेटया । प्राग्भवाभ्यासतस्तेन, क्रोधा-ध्मातेन जघ्निरे ॥ २४ ॥ निबध्योपनृपं नीत–स्तैः स भूपोऽपि तं जगौ । किमेतदिति सोऽप्याह, स्वस्वरूपं सवि-स्तरम् ॥ २५ ॥ चमत्कृतो नृपः प्राह, तं निजां भुङ्क्ष्व सम्पदम् । सोऽप्याह गृहवासेऽस्मिन् , रमते न मनो मम ॥ २६ ॥ ततो नृपतिपुत्राद्याः, प्रबुद्धास्तच्चरित्रतः । सोऽपि श्रीधर्ममाराध्य, क्रमात् सुगतिभागभूत् ॥ २७ ॥ अथ ते चिन्तयाञ्चक्रुः, पुत्रा हृदयचक्षुषा । अहो ! कियदुपक्रान्तं, पित्राऽस्माकं हितेच्छुना ॥ २८ ॥ विमृश्येति समस्तास्ते, तातोक्तविहितादराः । ऐहिकामुष्मिके कार्ये, सोद्यमं विदधुर्मनः ॥ २९ ॥ इति रोषजुषापि निर्मिता, जिनपूजा विफला बभूव न । तदहो ! जिनपूजने जनाः, प्रयतध्वं शिवसौख्यकांक्षिणः ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे एकादश उपदेशः ॥ ११ ॥

नादपूजां वितन्वन्ति ये मानवाः, श्रीजिनेन्दोः स्थिरस्फीतभावोद्यताः ।
तीर्थकृत्वं लभन्तेऽद्भुतं ते यथा, रावणो राक्षसानामधीशः पुरा ॥ १ ॥

अस्ति लङ्कापुरी यत्र, त्रिकुटो नाम पर्वतः । दुर्गायते समुद्रस्तु, परिखोपमतां दधौ ॥ १ ॥ आढ्यंभविष्णुर्विद्याभि–स्तत्र रावणभूपतिः । त्रिखण्डविजयी विश्व–कण्टको राक्षसाधिपः ॥ २ ॥ तस्य मन्दोदरी भार्या, चतुःषष्टिकलास्पदम् । शीलरूपादयो यस्याः, गुणा वर्ण्याः सुरैरपि ॥ ३ ॥ तया सह विमानेन, प्रस्थितो रावणोऽन्यदा । यात्रायै सर्वतीर्थाना–मात्मपावनहेतवे ॥ ४ ॥ क्रमेणाष्टापदं प्राप्त–श्चतुर्विंशतितीर्थपान् । स्वस्ववर्णप्रमाणाद्यै–रुपेतान् पर्यपूपुजत् ॥ ५ ॥ दृष्ट्वाथ धरणेन्द्रं स, प्राप्तं तत्र महामनाः । अपृच्छत् पर्वतः कोऽयं, चैत्यं केन च कारितम् ? ॥ ६ ॥ अवादीद्धरणोऽप्येवं, रावणाग्रे सविस्तरम् । अष्टापदस्य माहात्म्यं, केवलज्ञानिभाषितम् ॥ ७ ॥

तथा च श्रीजिनप्रभसूरिपादाः—

यस्मिन्नष्टापदभू–दष्टापदमुख्यदोपलक्षहरः । अष्टापदाभ ऋषभः, स जयत्यष्टापदगिरीशः ॥ १ ॥ ऋषभसुतानवनवति–र्बाहुबलिप्रभृतयः प्रवरयतयः । यस्मिन्नभजन्नमृतं, स जयत्यष्टापदगिरीशः ॥ २ ॥ अभजन्निर्वृतियोगं, वियोगभीरव इव प्रभोः समकम् । यत्रर्षिदशसहस्राः, स जयत्यष्टापदगिरीशः ॥ ३ ॥ रत्नत्रयमिव मूर्त्तं, स्तूपत्रितयं चितित्रयस्थाने, यत्रास्थापयदिन्द्रः, स जयत्यष्टापदगिरीशः ॥ ४ ॥ भरतो रचयच्चैत्यं, योजनदीर्घं तदर्धपृथुमानम् । क्रोश-

॥ १४ ॥ एवं तत्र स्नात्रनृत्योत्सवोघैः, सर्वे जन्म स्वं कृतार्थं विधाय । जग्मुः स्वस्वस्थानके प्राणिवर्गा–स्तस्मादेवं पूजनीया जिनेन्द्राः ॥ १५ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे द्वादश उपदेशः ॥ १२ ॥

---

द्रव्यतोऽपि विहिता जिनपूजा, स्याच्छुभायतिकृते तनुभाजाम् ।
श्रीनमिं च विनमिं च मुनीन्द्राः, प्राहुरुत्तमनिदर्शनमत्र ॥ १ ॥

अस्त्ययोध्या पुरी तत्र, स्वामी श्रीवृषभध्वजः । ऐहिकामुष्मिका येन, व्यवहाराः प्रवर्त्तिताः ॥ १ ॥ भरतप्रमुखाः जाताः, शुभोदर्कधियः सुताः । शतशाखतया तस्य, कुटुम्बं वबृधे प्रभोः ॥ २ ॥ त्र्यशीतिपूर्वलक्षाणि, प्रकाश्य शकलाः कलाः । विभज्य राज्यं पुत्रेषु, दत्वा हित्वा परिग्रहम् ॥ ३ ॥ प्रभुश्चैत्रासिताष्टम्यां, चातुर्मौष्टिकलोचकृत् । प्रवव्राज सुराधीश–कृतोत्सवपरम्परः ॥ ४ ॥ ततः कच्छमहाकच्छा–दयः प्रौढकुलोद्भवाः । चतुःसहस्रप्रमिता–स्तमनु प्राव्रजन् प्रभुम् ॥ ५ ॥ परं ते स्वामिवत् कष्टं, घोरं निर्मातुमक्षमाः । जटिलीभूतमूर्द्धानः, क्रमाज्जाता जटाधराः ॥ ६ ॥ गङ्गादिसरितां तीरे, कृतसेवालभक्षणाः । कालं निर्गमयामासु–र्लज्जया वेषधारिणः ॥ ७ ॥

---

१ "–त्सवाद्यैः" इत्यपि । २ "अशीति–" इत्यपि ॥

स्वामी तु प्रासुकाहारा–ऽप्राप्त्या नित्यमुपोषितः । विजहार भुवं मौन–व्रतवान्वीतदूषणः ॥ ८ ॥ यदा श्रीऋषभो दानं, दत्तवान् वार्षिकं जने । तदा कच्छमहाकच्छ–सुतौ देशान्तरे गतौ ॥ ९ ॥ नाम्ना नमिविनम्याख्यौ, प्रासवन्तौ निजे गृहे । तादृक् स्वरूपं विज्ञाय, तातपार्श्वे समीयतुः ॥ १० ॥ पृष्टं च ताभ्यां किमिदं युवाभ्या–मारब्धमेतावपि तत्स्वरूपम् । सर्वं यथावृत्तमवोचतां त–द्यातां गृहे श्रीभरतोऽस्ति राज्यदः ॥ ११ ॥ साभिमानतया चक्रु–रवज्ञां भरतेशितुः । स्वाम्येव राज्यदाता नः, सर्वसाधारणो हि सः ॥ १२ ॥ इत्युक्त्वा तौ नमस्कृत्य, ततो यातौ वनान्तरे । यत्रास्ति प्रतिमानिष्ठः, स्वामी श्रीऋषभप्रभुः ॥ १३ ॥ प्रातः पानीयमानीय, प्रक्षाल्य चरणौ प्रभोः । पूजयित्वाम्बुजैः स्वामिन् !, राज्यं देहीति वादिनौ ॥ १४ ॥ निष्कोशखड्गहस्तौ तौ, पार्श्वयोरुभयोरपि । दत्तदृष्टी प्रभोः सेवा–सावधानौ बभूवतुः ॥१७॥ एवं वितन्वतोः सेवां, तयोरन्येद्युराययौ । धरणेन्द्रमहाराजो, नमस्कर्तुं जिनेश्वरम् ॥ १६ ॥ तथाविधौ च तौ दृष्ट्वा, सेवाकर्मणि लालसौ । बभाषे भो महाभागौ !, स्वाम्येष खलु निर्ममः ॥ १७ ॥ दत्ते न किञ्चित्कस्मैचि–न्न तुष्यति न रुष्यति । किमर्थं सेव्यते ह्येष, भवद्भ्यां भवतृष्णया ॥ १८ ॥ सरोषतर्जनं ताव–प्यूचतुर्द्धरणं प्रति । स्वमार्गे गच्छ भोः पान्थ !, चिन्तया किं करोषि नः ॥ १९ ॥ अवादीत् धरणो नाहं, पथिकः किन्तु नागराट् । राज्यादि दाता याचेथां, तद्युवां यद्विलोक्यते ॥ २० ॥ त्रैलोक्यं यच्छसि त्वं चे–न्न कार्यं तदपि त्वया । यदि दास्यति तद्दाता, स्वाम्येव खलु नापरः ॥ २१ ॥ भक्तिस्थैर्यमिति ज्ञात्वा–ऽवातरत्स्वामिनो मुखे ।

तुष्टो भवद्भ्यामेषोऽहं, साम्राज्यं गृह्यतामिदम् ॥ २२ ॥ इति प्रोच्य स वैताढ्या-ऽधिपत्यं प्रददे तयोः । अष्टचत्वारिंशत् सहस्राणि, प्रौढविद्याश्च विश्रुताः ॥ २३ ॥ दत्त्वैवं राज्यविद्यादि-सम्पदं धरणस्तयोः । निजं स्थानमगात्ताव-प्येवं तुष्टुवतुर्जिनम् ॥ २४ ॥ जय त्रिजगतीजन्तु-जातनिर्वाहकारक ! । जय प्रथमतीर्थेश !, जय संसारतारक ! ॥ २५ ॥ अथ प्रथमनाथं तौ, प्रणत्य गगनाङ्गणे । उत्पत्य यातौ वैताढ्ये, राजधानीं च चक्रतुः ॥ २६ ॥ क्रमेण पष्टिः पञ्चाश-दक्षिणोत्तरपार्श्वयोः । नगराणि पुनस्ताभ्यां, निवेश्यन्ते स्म तद्गिरौ ॥ २७ ॥ साधयित्वाखिलान् देशान् , वशीकृत्य च राजकम् । जातौ विद्याधराधीशौ, प्रौढदोःस्थामधारिणौ ॥ २८ ॥ प्रान्ते श्रीजिनपादान्ते, प्रव्रज्यां प्राप्य निर्वृतौ । साधुकोटिद्वयीयुक्तौ, श्रीशत्रुञ्जयपर्वते ॥ २९ ॥ अन्यत्राप्युक्तम्—

मुणिणोवि तुहल्लीणा, नमिविनमी खेयराहिवा जाया । गुरुआण चलणसेवा, न निप्फला होइ कइआवि ॥ १ ॥

इत्थं कृताप्यैहिकभोगतृष्णया, भक्तिर्जिनेन्दोर्ददते तनूमताम् ।
यदैहिकामुष्मिकसत्फले ततो, यतध्वमत्रैव जनाः शिवैषिणः ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे त्रयोदश उपदेशः ॥ १३ ॥

---

हस्तात् प्रस्खलितं क्षितौ निपतितं लग्नं तथा पादयो-र्यन्मूर्द्धोर्द्धगतं धृतं कुवसनैर्नाभेरधो यद्धृतम् । स्पष्टं दुष्टजनैर्घनै-

नशासने ॥ १३ ॥ निर्विवेकतया किन्तु, ह्यस्तनैः पतितैरपि । सद्गन्धैरथ दुर्गन्धैः, पुष्पैः श्रीजिनमार्चयत् ॥ १४ ॥ कदाचिन्निर्म्मितस्नानो, जातु स्नानविवर्जितः । दुर्वस्त्रो वा सुवस्त्रो वा, प्रायो देवमपूजयत् ॥ १५ ॥ जातु प्रमादतः पूजा, जायते विधिवर्जिता । भवेत्तदा तु स्वीकार्यं, प्रायश्चित्तं गुरूदितम् ॥ १६ ॥ अनालोचिततत्पाप-श्चण्डालस्य कुले भवान् । जातो बभूव राज्यं तु, श्रीजिनार्चानुभावतः ॥ ७ ॥ श्रुत्वेति मुदितस्वान्तो, जातजातिस्मृतिर्नृपः । अवादीद्देहि मे तात !, दीक्षां मोक्षफलप्रदाम् ॥ १८ ॥ राज्यभारं सुते न्यस्य, प्रतिपन्नव्रतस्ततः । अतीचारपरीहारात्, क्रमात्सद्गतिभागभूत् ॥ १९ ॥ इत्यल्पधीभिर्विहितापि पूजा, विधिं विना श्रीत्रिजगत्प्रभूणाम् । फलं प्रदत्ते खलु तुच्छमेव, ततो यतध्वं विधिमार्ग एव ॥ २० ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे चतुर्दश उपदेशः ॥ १४ ॥

---

विधाय दीपं जिनपुङ्गवाना-मग्रेऽथ सर्वं निजगेहकृत्यम् ।
तेनैव चेन् मन्दमतिः करोति, प्राप्नोति मूर्खः स कुयोनिभावम् ॥ १ ॥

अरविन्दपुरे राजा-ऽजितसेन इति श्रुतः । तत्रैव वसति श्रेष्ठी, देवसेनो वणिग्वरः ॥१॥ कुर्वाणो धर्मकर्माणि, श्रद्धानोऽर्हतां वचः । दीनादिषु ददद्दानं, समया कुरुते स्म सः ॥२॥ औरभ्रिकोऽस्ति तत्रैक-स्तद्गेहान्मोहमोहिता । आयाति

श्रेष्ठिनो गेहे, काचिदुष्ट्री प्रतिप्रगे ॥ ३ ॥ स तु तां कुट्टयामास, लकुटैः कृपयोज्झितः । न तिष्ठति तथाप्येषा, तद्गेहागमनं विना ॥ ४ ॥ ततो जग्राह तां श्रेष्ठी, मूल्येनापि कृपापरः । प्रमोदमेदुरा सापि, सुखेनास्थात्तदौकसि ॥ ५ ॥ अन्येद्युस्तत्पुरे प्रापु–राचार्या धर्म्मसूरयः । राजादिलोकसर्वोऽपि, वन्दितुं तत्र चाययौ ॥ ६ ॥ श्रीधर्म्मदेशना चक्रे, सूरिभिर्धर्म्मभूरिभिः । पप्रच्छ करभीवृत्तं, श्रेष्ठी धर्म्मिष्ठमानसः ॥ ७ ॥ गुरुः प्रोवाच भो वत्स !, तवैषा जननी ह्यऽभूत् । प्राग्भवे मनसोऽभीष्टा, पूज्या स्वजनसन्ततेः ॥ ८ ॥ सदापि धर्म्मानुष्ठान–निष्णातमतिवैभवा । नित्यं स्वगृहबिम्बाग्रे, दीप्रं दीपं करोत्यसौ ॥९॥ परं तेनैव दीपेन, गृहकार्याणि चक्रुषी । अनालोचिततत्पापा, सैवेत्थमुदपद्यत ॥ १० ॥ अत्र कः प्रत्ययः श्रेष्ठि–पृष्टः सूरिः पुनर्जगौ । निधिर्न्यासीकृतो योऽभूत्, त्वत्पित्रा गृहकोणके ॥११॥ स प्राप्तो न त्वया भद्र !, बहुशोऽपि विलोकितः । तं चैषा वेत्ति ते माता, प्राग्भवाभ्यासयोगतः ॥ १२ ॥ सापि ज्ञानिवचः श्रुत्वा, जातिस्मरणवत्यभूत् । सोऽपि नत्वा मुनिं तां च, लात्वा स्वगृहमागतः ॥ १३ ॥ तां च पप्रच्छ हे मात–र्निधानं मे प्रदर्शय । सापि प्रमुदिता तस्मै, निधिस्थानमदर्शयत् ॥ १४ ॥ ततो विरक्तः संसारात्, स श्रेष्ठी तद्धनं समम् । व्ययीकृत्य सुपात्रादौ, भवस्थितिमचिन्तयत् ॥ १५ ॥ अहो ! मातापि मे जाता, करभी कर्म्मयोगतः । तदलं क्लेशकोटीनां, निमित्तेन गृहेण मे ॥ १६ ॥ कृतं परिच्छदेनापि, परमार्थैकशत्रुणा । विमृश्येति प्रवव्राज, तेषामेवान्तिके कृती ॥ १७ ॥ साप्युष्ट्र्यपि कियत्कालं, भ्रान्त्वात्र भवकानने । लब्ध्वा प्रौढकुले जन्म, सिद्धिं यास्य-

त्यसंशयम् ॥ १८ ॥ कारंकारं दीपपूजामपीत्थं, सा स्त्री जाता यद्वदुष्ट्री वराकी । भो भो भव्यप्राणभाजस्तदेवं युक्तो जैनाभ्यर्चने वो विवेकः ॥ १९ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे पञ्चदश उपदेशः ॥ १५ ॥

चेतः पुनाति घनकर्म्मवनं लुनाति, स्वर्गं ददाति शिवसम्पदमादधाति । पुण्योदयं वितनुते चिनुते सुखानि, श्रीजैनपूजनमिदं किल किं न दत्ते ? ॥ १ ॥ मिथ्यादृग्भव्यभावेन, पूजां कृत्वा जिनेशितुः । अशोको मालिको लेभे-ऽद्भुतां सौख्यपरम्पराम् ॥ २ ॥

महाराष्ट्रे महाराष्ट्रे, ग्रामे हल्लूरनामनि । मिथ्यादृग् भद्रकस्वान्तो, बभूवाशोकमालिकः ॥ १ ॥ अन्यदा पर्वणि क्वापि, श्राद्धैरेष विनिर्मिताम् । दृष्ट्वा जिनेशितुः पूजां, मनस्येवमचिन्तयत् ॥ २ ॥ वस्त्रं पवित्रं परिधाय ये श्री-जिनं यजन्ते भुवि ते प्रशस्याः । न मादृशाः किन्तु सदा दरिद्राः, न धर्म्मगन्धोऽपि यदीयचित्ते ॥ ३ ॥ आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि, नूनं न चेतसि मया विधृतोऽसि भक्त्या । जातोऽस्मि तेन जनबान्धव ! दुःखपात्रं, यस्मात्क्रियाः प्रतिफलन्ति न भावशून्याः ॥ ४ ॥ निर्भाग्यं स्वं ततो निन्दं-स्तदैवोत्पन्नवासनः । विक्रीतोद्वरितैः

१ "श्रेयो" इत्यपि ॥

इत्यशोकवनमालिकसत्का, सत्कथा बुधजना विनिशम्य । वीतरागपदपङ्कजपूजा–मेव निर्मलधियो वितनुध्वम् ॥१९॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे षोडश उपदेशः ॥ १६ ॥

---

गुणदोषाऽपरिज्ञाना–त्सर्वदेवेषु भक्तिमान् । यः स्यात् श्रीधरवत् पूर्वं, स तु नैवाश्नुते सुखम् ॥ १ ॥
निष्काङ्क्षमानसः साक्षा–ल्लभते स्वर्गसम्पदः । पश्चाद्यथा स एवेह, त्यक्ताकाङ्क्षोऽभवत्सुखी ॥ २ ॥

पुरे गजपुराभिख्ये, बभूव श्रीधरो वणिक् । प्रकृत्या भद्रको मुग्धो, यत्र तत्राभिलापवान् ॥ १ ॥ अन्यदेति मुनेः पार्श्वे, सोऽशृणोन्मसृणाशयः । श्रीजिनार्चारतः प्राणी, प्राप्नोति फलमीप्सितम् ॥ २ ॥ श्रुत्वैतत्कारयित्वा च, प्रतिमामार्हतीं सुधीः । त्रिसन्ध्यं पूजयामास, श्रीधरो भक्तिनिर्भरः ॥ ३ ॥ धूपोत्क्षेपपरोऽन्येद्यु–रग्रहीदित्यभिग्रहम् । अनिष्ठितेऽस्मिन् धूपे हि, नेतःस्थानाच्चलाम्यहम् ॥ ४ ॥ अथाऽकस्मादहिस्तत्र, निर्गतो दैवयोगतः । तं तथानिश्चलात्मानं, दुष्टो दशति यावता ॥ ५ ॥ जिनार्चानिश्चयात्तुष्टा, तावच्छासनदेवता । सर्प्पमुत्सारयामास, श्रीधरात्तं तथास्थितात् ॥ ६ ॥ तुष्टास्मीति ततोऽवादी–द्देवी तं श्रीधरं प्रति । यदेवं दृढता बाढं, तव श्रीजिनपूजने ॥ ७ ॥ तद्गृहाण मणिं लक्ष्मी–प्रदमेनं भवानहो ! । पूर्णप्रतिज्ञः सोऽप्येवं, जगृहेऽन्तर्हिता च सा ॥ ८ ॥ रत्नानुभावतो लक्ष्मी–र्वर्द्धतेऽस्य यथा यथा । जिनपूजादरोऽप्यस्य, स्पर्द्धयेव तथा तथा ॥ ९ ॥ अथाऽन्यदिवसेऽश्रौषी–न्मनीषी

कस्यचिद्वचः । यथाऽस्मिन्पूजिते यक्षे, प्राप्यते फलमीप्सितम् ॥ १० ॥ श्रीधरोऽपि ततस्तस्य, यक्षस्यार्चामचीकरत् । अतृप्तः पूजयामास, तामप्यासनमण्डिताम् ॥ ११ ॥ एवं लोकोक्तितश्चण्डीं, गणेशं चाप्यपूजयत् । क्व विवेकाऽवकाशः स्यात्, गुणदोषाऽवजानताम् ॥ १२ ॥ अन्यदा गृहसर्वस्वे, तस्करैर्मुषिते सति । संक्षुब्धमानसो याव-त्तावद्रत्नं विलोकते ॥ १३ ॥ तावद्देवीवरप्रास-मदृष्ट्वा तं महामणिम् । दुःखितः श्रीधरो जज्ञे, विज्ञमन्योऽपि सर्वदा ॥ १४ ॥ पश्चापि रत्नाभावेन, समस्ता तद्गृहाद्गता । भोजनस्यापि सन्देहः, पपात प्रतिवासरम् ॥ १५ ॥ ततो देवाग्रतस्तस्थौ, दिनत्रयमुपोषितः । दिने तृतीये तेऽप्याहुः, प्रत्यक्षीभूय तत्पुरः ॥ १६ ॥ किमर्थमस्मानस्मार्षी-स्त्वमेवं लङ्घनोद्यतः । यूयं मम मनोऽभीष्टं, कुरुध्वमिति सोऽप्यवक् ॥ १७ ॥ कुलदेवी ततोऽवादीत्, दुष्टनिष्ठुरमानस ! । रे दुष्ट ! शीघ्रमुत्तिष्ठ, याहीदानीं ममाग्रतः ॥ १८ ॥ दास्यन्त्येते तवाभीष्टं, देवाः सेवापरेण ये । त्वयानीता गृहे भक्ति-बहुमानपुरस्सरम् ॥ १९ ॥ स्मितपूर्वं भणन्ति स्म, ततो देवाः परस्परम् । गणेशश्चण्डिकां प्रोचे, भक्तेऽभीष्टप्रदा भव ॥२०॥ चण्ड्यपि प्राह यक्षोऽयं, दाताऽभीष्टानि यः स्वयम् । निविष्ट आसने प्रौढे, ममादौ पूज्यतेऽनिशम् ॥२१॥ यक्षोऽपि दक्षोऽभाषिष्ट, दात्री शासनदेवता । यया पूर्वमपि दत्तं, रत्नमपूर्ववैभवम् ॥ २२ ॥ एवं देवगिरं श्रुत्वा, परिहासपुरस्सरा । विपण्णं श्रीधरं प्राह, जिनगृह्या महासुरी ॥ २३ ॥ पश्य भो भद्र ! यद्देवै-रमीभिरखिलैरपि । अन्योऽन्याऽमर्षसम्पृक्तै-स्तवोपेक्षा व्यधीयत ॥ २४ ॥ ततः सर्वानिमांस्त्यक्त्वा, जिनमेकाग्रचित्ततः । पूजय त्वं यतोऽमुष्मिन्!,

पूजिते सर्वसिद्धयः ॥ २५ ॥ यज्जिताचरितैः सर्वै-र्देवैर्देवत्वमाप्यते । ततः समग्रदेवाना-मयमेवाऽत्र दैवतम् ॥२६॥ इत्यवेत्य निराकाङ्क्षो, यक्षादीनाह सादरम् । कृत्वा प्रसादं मद्गेहात्, यूयं यात निजं पदम् ॥ २७ ॥ ततो निश्चलचित्ताय, श्रीधराय पुनर्ददौ । शासनस्य सुरी हृष्टा, रत्नकोटीरनेकशः ॥ २८ ॥ ततस्त्रिरर्हत्पदपूजया सृजन्, दानैश्च लक्ष्मीः सफला निजार्जिताः । प्रान्ते परिव्रज्य विमुक्तिसुन्दरी-वक्षस्थले हारतुलामयं दधौ ॥ २९ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे सप्तदश उपदेशः ॥ १७ ॥

---

नैकाग्रचित्ताः परितन्वते ये, सुश्रावकाः श्रीजिनराजपूजाम् ।
ते हास्यपात्रं विदुषां भवन्ति, श्राद्धो यथाभूज्जिणहाभिधानः ॥ १ ॥

धवलक्कपुरे श्रीश्री-मालज्ञातिशिरोमणिः । जाहापुत्रोऽभवत् श्रेष्ठी, जिणहाख्योऽतिदुर्गतः ॥ १ ॥ घृतकर्पासतैलाढ्यं, विक्रीयात्मोदरंभरिः । चकराजीविकां किन्तु, जिनधर्मविवर्जितः ॥ २ ॥ अन्यदाऽभयदेवाख्य-सूरिभ्यो धर्म्ममार्हतम् । श्रुत्वा भक्तामरस्तोत्रं, स पपाठ स्वभक्तितः ॥ ३ ॥ नित्यं तत्त्रिः परावृत्त्य, श्रीपार्श्वं परिपूज्य च । कृत्वा च धर्म्मकर्त्तव्यं, स चक्रे सफलं जनुः ॥ ४ ॥ शाखापुरेऽन्यदा तस्य, प्राप्तस्य स्मरतो निशि । त्रयस्त्रिंशं महावृत्तं, तुष्टा चक्रेश्वरी ततः ॥ ५ ॥ काव्यं चेदम्—

इत्थं यथा तव विभूतिरभूज्जिनेन्द्र !, धर्मोपदेशनविधौ न तथा परस्य ।
याद्दक्प्रभा दिनकृतः प्रहतान्धकारा, ताद्दक् कुतो ग्रहगणस्य विकाशिनोऽपि ॥ १ ॥

जयप्रदं वश्यकरं, गृहाण मणिमुत्तमम् । इत्युक्त्वा सा तिरोधत्त, सोऽपि हस्ते बबन्ध तम् ॥ ६ ॥ प्रातस्तत्रत्यकृत्यानि, विधाय स्वपुरं प्रति । आगच्छन्नेष मार्ग्गे तु, रुरुधे तस्करैस्त्रिभिः ॥ ७ ॥ बाणत्रयेण तान् हत्वा, लीलया स्वपुरं ययौ । अचिन्त्यो मणिमन्त्रादि–महिमा यत उच्यते ॥ ८ ॥ श्रुत्वा तद्वृत्तमाकार्य, पत्तने भीमभूभुजा । अभाणि जिणहो भद्र !, दुष्करं कृतवानसि ॥ ९ ॥ तदा च धनवस्त्राद्यैः, स हीनोऽपि सभाजनैः । दृष्टः कण्ठीरव इव, प्राज्यशौण्डीर्यमण्डितः ॥१०॥ तदा च तस्य निष्कोशे, मण्डलाग्रे महीभुजा । समर्प्यमाणे सेनानीः, शत्रुशल्योऽब्रवीदिति॥११॥ खण्डउं तासु समप्पीइं, जसु खंडइ अभ्यास । जिणहा इक्क समप्पीइं, तिलतोलं कप्पास ॥ १ ॥ जिणहः प्राह—

असिधर धणुधरकुंतधर सत्तिधराय बहू अ । सत्तुसल्ल रणसूर नर विरलति जणणि पसूय ॥ १ ॥

राजाप्राह–साधूक्तम् । यतः—

अश्वः शस्त्रं शास्त्रं, वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता, भवन्ति योग्या अयोग्याश्च ॥ १ ॥

ततो भीमनृपस्तं त्रिः, पर्यधापयदुज्ज्वलैः । पट्टकुलैः सुवर्णाद्यं, प्रभूतं च ददौ मुदा ॥ १२ ॥ खड्गं विकोशं सैन्यं

च, धवलकपुरंशितान् । दत्वा तं व्यसृजद्राजा, सोऽपि स्वं पुरमाययौ ॥ १३ ॥ ततः प्रभृति चौराणां, नामापि खलु निष्ठितम् । गूर्जरत्राक्षितौ तस्मिन्, रक्षके दण्डनायके ॥ १४ ॥ अन्यदा चारणः कोऽपि, तत्परीक्षाचिकीर्षया । करभं चोरयामास, धृतोऽसौ जिणहाजनैः ॥ १५ ॥ आनीय दर्शितो दण्डे–शाय पूजां वितन्वते । स्वामिन्नेतस्य चौरस्य, दण्डः क इति कथ्यताम् ॥ १६ ॥ अङ्गुलीसंज्ञया सोऽपि, तेभ्यस्तं वध्यमादिशत् । चारणोऽवसरज्ञोऽथ, तं प्रत्येवमभाषत ॥१७॥ इक जिणहा नइं जिणवरह, न मिलइं तारोतार । जेण अमारण पूजीइं, ते किम मारणहार ॥१८॥ श्रुत्वेति विस्मितः स्वान्ते, स्मितपूर्वं मुमोच तम् । चौर्यं न जातुकार्यं च, त्वयेति तमशिक्षयत् ॥१९॥ चारणोऽप्याह—

इक्का चोरी सा जिकिय, जा खोलडइं न माइं । बीजी चोरी जे करइं, चारण चोर न थाइं ॥ १ ॥

देव ! त्वया वणिग्मात्रे–णापि सर्वेऽपि तस्कराः । कथं विनाशिता एषा, परीक्षाद्य मया कृता ॥ २० ॥ ततो दत्वा वहुद्रव्यं, स्वस्थाने प्रेषयत्स तम् । स्वयं त्वेकमनाः पूजां, कृत्वा भुक्त्याद्यसाधयत् ॥ २१ ॥ एवं सुभटकोटीपु, प्रासः कोटीरतामसौ । महीं निष्कण्टकां कुर्वन्, श्रावकः परमोऽभवत् ॥ २२ ॥ शुल्कं पोट्टलिकानां च, स मुमोच कृपापरः । ततोऽनु नगरे तत्र, सा व्यवस्थाग्रतोऽभवत् ॥ २३ ॥ अद्यापि यः समादत्ते, करं तेभ्यो हठादपि । महा-

---

१ "ततो–"इत्यपि ॥

जनविरोधित्वात्, स चिरं नैव नन्दति ॥ २४ ॥ एवमेष जिणहाभिधो वणिक्, स्वान्ययोरुपकृतौ कृतादरः । धर्मकृत्यनिरतश्चिरं क्रमात्, प्रासवान् सुगतिमद्भुतर्द्धिकः ॥ २५ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेधिकारेऽष्टादश उपदेशः ॥ १८ ॥

---

कुर्वन्ति देवद्रविणोपभोगं, ये ते नरा दुर्गतिगामिनः स्युः । कथानकान्यत्र बहूनि सन्ति, तथापि दिग्मात्रमुदाह्रियेत ॥ १ ॥

इह खलु एकान्तश्रीदेवगुरुभक्तिकारकेण विशुद्धश्रीसम्यक्त्वमूलद्वादशव्रतधारकेण सुश्रावकेण देवसम्बन्धिद्रव्योपभोगः सर्वथा न कार्यः, स्वपरसमयनिषिद्धत्वाद् बहुदोषसंभवाच्च ।

देवद्रव्येण या वृद्धि–र्गुरुद्रव्येण यद्धनम् । तद्धनं कुलनाशाय, मृतोऽपि नरकं व्रजेत् ॥ १ ॥

एकमपि कटुकतुम्बीबीजं भारसहस्रप्रमाणमपि गुडं विनाशयति । विषस्य लवोऽपि परमान्नभृतं स्थालं सर्वेषामनुपयोगि किं न विधत्ते ? । दृश्यन्ते च केऽपि मूर्खा देवद्रव्येण व्यवसायादि कुर्वन्तः, कदाचिन्निर्द्धनत्वे जाते देवद्रव्यसाराविधायिभिस्तद्द्रव्यपश्चान्मार्गणे एवं वदन्तो यथा–न सन्ति सम्प्रत्यस्मत्पार्श्वे द्रम्माः, पितृस्थानीयो वाऽस्माकं जिनः, नहि पितृधनं पुत्राणां किमप्यनादेयम्, इत्यादियत्तत्प्रलापिनो वराकास्तेऽनन्तानन्तसंसारक्लेशभाजनं भवन्ति । केचित्तु धनवन्तोऽपि महत्त्वस्पृहयालवः प्रभूतसमुदायमध्ये बहुद्युम्नपरिहितेन्द्रमाला लभ्यीकृत्य बहुदेवद्रव्या

अपि तन्मार्ग्गणे दीनमेव भाषन्ते, मनसापि तदर्प्पणं न वाञ्छन्ति । देवस्य किमपत्यानि क्षुधा म्रियमाणानि सन्ति । देवस्तव किमधिको मम किं न्यूनो, यदा विलोकयिष्यते तदानीमर्प्पयिष्यामि, इत्यादि कालक्षेपमेव कुर्वाणा उल्लुण्ठवादिनस्तेऽपि तेषामेव पंक्तौ निवेशनीयाः ॥ अत्र भ्रातृद्वयोदाहरणम्—

विश्वपुरे क्षेमङ्करो राजा तस्य युगन्धरः पुत्रः । सोऽन्यदा वने कस्यापि मुनेः केवलज्ञानोत्सवं देवैः क्रियमाणं दृष्ट्वा सञ्जातजातिस्मृतिस्तदैवोत्पन्नवैराग्यो देवतादत्तवेषः प्रवव्राज । वन्दितो राजाद्यैः । विजहार वसुन्धरावलये । चकार भूयांस्यपि तपांसि । अन्यदा तस्य मुनेः शुक्लध्यानाऽधिरूढस्याऽवधिज्ञानमुत्पेदे । आगतस्तत्रैव पुरे । राजादयो वन्दितुं गताः । प्रारब्धा तेनापि धर्म्मदेशना । तत्र चावसरे कोऽपि कुष्ठी सर्वरोगराजधानीव, मक्षिकाणां पितृगृहमिव, पदे पदे बालकाद्यैरपि कर्करादिभिरुपहन्यमानस्तत्र प्राप्तः । राजादयश्च तादृशदुर्दशानिपतितं दृष्ट्वा तस्य प्राच्यभवं मुनेः पार्श्वे पृच्छन्ति । मुनिः प्राह—कुसुमपुरे नन्दनागदेवौ द्वौ भ्रातरौ । वृद्धो व्यवहारे शुद्धः, अपरस्तु विपरीतः । अन्यदा तन्नगराधिपेन स्वकारितजिनमन्दिरे देवद्रव्यरक्षणाय नियुक्तौ, स्वशक्त्या सारां कुरुतः । अन्यदा नागदेवः क्षीणधनोऽन्तरान्तरा निर्लज्जतया स्वल्पं स्वल्पं तु देवद्रव्यं भुङ्क्ते । वृद्धभ्रात्रा तु—

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । भक्खंतो जिणदव्वं, अणंतसंसारिओ होइ ॥ १ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । रक्खंतो जिणदव्वं, परित्तसंसारिओ होइ ॥ २ ॥

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । वड्ढंतो जिणदवं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥

इत्यादि वहुप्रकारश्रीआगमोक्तवाचोयुक्तिभिर्निवारितोऽपि यावता लघुर्न तिष्ठति तावता वृद्धश्चिन्तयति स्म प्रात- भूपाय निवेदयिष्यामीति। अत्रान्तरे अकस्माच्छूलेन रात्रौ मृतः व्यवहारिणः सुतो जातः। तत्र भवे भव्यान् भोगान् भुक्त्वा प्रान्ते व्रतं लात्वा प्राणतकल्पे देवो जातः । एवं सप्तभवान् दीक्षामाराध्य अच्युतादिषु देवत्वेन समुत्पद्य च क्रमेण सोऽहं युष्मत्पुत्रो युगन्धरो जातः । नागदेवस्तु तस्मिन्नेव भवे विज्ञातस्वरूपः सन् राजादिभिर्भृशं गर्हितः । भक्षि- तदेवद्रव्यपदे गृहीतगृहसर्वस्वश्च प्रान्ते षोडशवर्षाणि रोगार्त्तः शेषद्रव्यार्प्पणाय सुतानां कथयित्वा मृतः । पूर्वाभ्या- सतश्च प्रतिभवं तथैव कुर्वन् सप्तसु नरकेषु तिर्यग्भवान्तरितो भ्रामं भ्रामं एष वराकः कुष्ठी जातः । यदुक्तम्—

भक्खणे देवदव्वस्स, परत्थीगमणेण य । सत्तमं नरयं जंति, सत्तवाराउ गोअमा ! ॥ १ ॥

इति श्रुत्वा स कुष्ठी जातिस्मृतिं प्राप्य आलोचितसकलपापः, प्रान्ते प्रपन्नानशनो मृत्वाऽच्युते देवो जातः । क्रमेण महाविदेहे मोक्षंगमी । स च युगन्धरराजर्षिरपि क्रमेण सिद्धिसौधमध्यास्त ॥

परसमयोक्तमप्युदाहरणं यथा—

प्रभास्वे मा मतिं कुर्यात् , प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति, प्रभादग्धाः पुनर्नहि ॥ १ ॥

पुरा जगत्रयाभीष्ट–नामा श्रीरामभूपतिः । यदा पुर्यामयोध्यायां, साम्राज्यं पर्यपालयत् ॥ १ ॥ तदैकः कुक्कुरः

कश्चि–न्निविष्टो राजवर्त्मनि । केनचिद्ब्रह्मपुत्रेण, कर्कःरेण हतः श्रुतौ ॥ २ ॥ श्वा निर्यल्लोहितो न्याय्य–स्थानं गत्वा निविष्टवान् । भूपेनाहूय पृष्टोऽवग्, निरागाः किमहं हतः ? ॥ ३ ॥ तद्धातकं ब्रह्मपुत्रं, तत्रानाय्य नृपोऽब्रवीत् । असौ त्वद्धातको ब्रूहि, कोऽस्य दण्डो विधास्यते ॥ ४ ॥ श्वाऽवोचदस्य रुद्रस्य, माठापत्ये नियोज्यताम् । क एष दण्डो राज्ञेति, भाषितः श्वा पुनर्जगौ ॥ ५ ॥ प्रागहं सप्त जन्मभ्यः, पूजयित्वा सदाशिवम् । देवस्वभीत्या प्रक्षाल्य, पाणी भोजनमाचरम् ॥ ६ ॥ स्त्यानाज्यमन्यदा लिङ्ग–पूरणे लोकढौकितम् । विक्रीणानस्य काठिन्या–न्नखान्तः प्राविशन्मम ॥ ७ ॥ विलीनसुष्णभक्तेना–ऽजानता तन्मयाहृतम् । तेन दुष्कर्म्मणा सप्त–कृत्वो जातोऽस्मि मण्डलः ॥ ८ ॥ सप्तमेऽस्मिन् भवे राजन् !, जात जातिस्मृतिर्मम । अधुना त्वत्प्रभावेण, जाता वाग्मम मानुषी ॥ ९ ॥ एवमज्ञानतो भुक्तं, देवस्वं दुःखकारणम् । रक्षणीयमतस्तद्धि, विवेकज्ञैः स्वशक्तितः ॥ १० ॥ अधिकारात्रिभिर्मासै–र्माठापत्यात्रिभिर्दिनैः । शीघ्रं नरकवाञ्छा चेत्, दिनमेकं पुरोहितः ॥ ११ ॥ विन्ध्याटवीष्वतोयासु, शुष्ककोटरवा–सिनः । कृष्णसर्पाः प्रजायन्ते, देवदायोपहारिणः ॥ १२ ॥ एवं देवद्रव्यरक्षाविनाशे, श्रुत्वा भव्याः ! स्पष्टदृष्टान्त–युग्मम् । कार्यो यत्नस्तस्य रक्षाविधाने, संसारः स्याद्वो यथा शीघ्रमल्पः ॥ १३ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे देवद्रव्योपरि ( एकोनविंशो विंशतितमश्च ) उपदेशः ॥ १९ ॥

ये सङ्कटेऽपि नियमं न परित्यजन्ति, ते वासवैरपि नराः परिपूजनीयाः ।
प्राप प्रसिद्धिमसमां वणिजो यथैकः, श्रीजैनपूजनविनिश्चयवान् धनाख्यः ॥ १ ॥

मण्डले मालवे नाम्नि, श्रीमङ्गलपुरं पुरम् । तत्प्रत्यासन्नभूतास्ति, पल्ली भिल्लसमाकुला ॥ १ ॥ चैत्यमेकं च तत्रास्ति, पुरा केनापि कारितम् । तस्मिंश्चतुर्थतीर्थेश–प्रतिमा चातिशायिनी ॥ २ ॥ अन्यदा म्लेच्छसैन्येन, तत्राकस्मादुपेयुषा । तज्जिनायतनं भग्नं, स्वभाग्यमिव पापिभिः ॥ ३ ॥ अधिष्ठातृप्रमादेन, प्रतिमाया जिनेशितुः । चैत्यालङ्कारभूतायाः, निर्ममे खण्डसप्तकम् ॥ ४ ॥ सञ्जातखेदैस्तैर्भिल्लै–स्तत्त्वज्ञानबहिष्कृतैः । सप्तानि तानि खण्डानि, संमील्यैकत्र दध्रिरे ॥ ५ ॥ इतश्च धारलीग्रामा–देकश्छेको वणिग्वरः । नित्यं तत्र समागत्य, क्रयविक्रयमातनोत् ॥ ६ ॥ स तु श्राद्धो भुक्तिकाले, गृहे गत्वैव भुक्तवान् । अपूजिते जिनाधीशे, नियमस्तस्य भोजने ॥ ७ ॥ पल्लीनिवासिनो भिल्लाः, अन्येद्युस्तं बभाषिरे । एहिरेयाहिरा भद्र !, सर्वदा तव दुष्करा ॥ ८ ॥ अत्रैव भुङ्क्ष्व त्वं किं न, वसतिं वा करोषि न । सर्वेऽपि वयमेते स्म, किङ्करा इव ते यतः ॥ ९ ॥ अभाणीद्वणिजो देवे, भुञ्जे नाहमपूजिते । तेन नित्यं गृहे यामि, भुञ्जे तत्पूजनादनु ॥ १० ॥ भिल्लाः प्रोचुः प्रफुल्लास्याः, एको देव इहापि भोः ! । अस्तीति तानि खण्डानि, संयोज्याऽस्मै प्रदर्शितः ॥११॥ अखण्डं तं च मन्वानः, ऋजुधीः सोऽप्यवन्दत । शुद्धमम्माणिपाषाण–घटितं पुलकाङ्कितः ॥ १२ ॥ पुष्पाद्यैः पूजयित्वा च, स्तुत्वा स्तोत्रै रनेकशः । नित्यं तत्रैव भुक्त्यादि, चकार सरलाशयः ॥ १३ ॥

अथान्यदा नाहलैस्तै–स्तत्पार्श्वे किञ्चिदर्थितम् । स तु तन्नार्प्पयत्तेन, ते किञ्चित्क्रोधमादधुः ॥ १४ ॥ तद्बिम्बं शकलीकृत्य, क्वापि गुप्तमधारयत् । पूजनाऽवसरे देव–मदृष्ट्वा स विषेदिवान् ॥ १५ ॥ तदहन्युपवासोऽभूत्, तस्यैवं दिवसत्रयम् । भिल्लैः सानुशयैः पृष्टः, किमश्नासि न भो वणिक् ! ॥ १६ ॥ सोऽप्याह भो ! न जानीथ, यूयं किं मम निश्चयम् । कदाप्यपूजिते देवे, प्राणान्तेऽप्याहरामि किम् ? ॥ १७ ॥ अस्मभ्यं चेद्गुडं दत्से, दर्शयामस्तदैव तम् । ओमिति प्रतिपेदाने, तस्मिंस्ते मुदिता हृदि ॥ १८ ॥ पूर्ववत्तानि खण्डानि, तस्मिन्पश्यति तैः पुनः । यथावयवविन्यासं, बिम्बं संयोज्य दर्शितम् ॥ १९ ॥ विलोक्यैवं स पुण्यात्मा, भृशमेव विषादवान् । इत्यभिग्रहमाधत्त, सात्त्विकानां शिरोमणिः ॥ २० ॥ अखण्डं यावदेतन्न, तावन्नाश्नामि सर्वथा । ततो रजन्यां तं प्राह, स्वप्नेऽधिष्ठायकः सुरः ॥ २१ ॥ चन्दनस्य विलेपेन, खण्डान् सप्तापि मीलय । अखण्डत्वं ततो भावि, प्रातः सोऽपि तथाऽकरोत् ॥ २२ ॥ एवं श्रीअभिनन्दनबिम्बं, कृत्वा व्यक्तमखण्डाकारम् । दत्तकिरातगुडादिद्रव्यः, सुस्थाने क्वचिदर्च्चयति स्म ॥ २३ ॥ एवं च तीर्थं तज्जातं, महामहिमभासुरम् । चतुर्दिग्भ्यः समायान्ति, तत्र सङ्घाश्च भूरयः ॥ २४ ॥ तत्प्रभावाज्जातपुत्रः, साधुर्हालाभिधः सुधीः । प्राग्वाटवंशमूर्द्धन्य–स्तत्र चैत्यमचीकरत् ॥ २५ ॥ श्रुत्वा च तस्य माहात्म्यं, भूपतिर्मालवेश्वरः । चकार प्रत्यहं पूजा–ध्वजस्नात्रादिकोत्सवान् ॥ २६ ॥ स श्राद्ध एवं परिपूज्य देवं, प्राप

प्रतिष्ठां नियमैकचित्तः । ततोऽन्यकृत्यं जिनपूजनादि, कृत्वैव कार्यं भविकैर्दृढास्थैः ॥ २७ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे एकविंश उपदेशः ॥ २१ ॥

---

नो मत्सरः क्वापि विवेकिभिर्जिन–प्रासादपूजादिकधर्मकर्मणि ।
कार्यो ह्यनर्थाय भवेदयं यथा, श्रीकुन्तलायाः समजायत स्फुटम् ॥ १ ॥

अवनिपुरमित्यस्ति, पुरं स्वर्गिपुरोपमम् । जितशत्रुरभूत्तत्र, भूपतिर्भूरिविक्रमः ॥ १ ॥ कुन्तलाऽभूत्प्रिया तस्य, राज्ञः पट्टप्रतिष्ठिता । अपरा अपि संजाता–स्तस्य पत्न्यः परःशताः ॥ २ ॥ ताः कारयन्ति चैत्यानि, स्वस्वद्रव्यैरनेकशः । विस्तार्यन्ते पुनस्तासां, कीर्त्तयो याचकव्रजैः ॥ ३ ॥ ततः सा कुन्तलादेवी, मत्सरग्रस्तमानसा । प्रासादं कारयामास, सविशेषं पुरान्तरे ॥ ४ ॥ तत्रैव प्रत्यहं पूजा–ध्वजस्नात्रादिकोत्सवान् । करोति कारयत्येषा, स्वयं परिजनैरपि ॥ ५ ॥ प्रासादेषु सपत्नीनां, दृष्ट्वा पूजादिकोत्सवान् । सन्तापं तनुतेऽत्यन्तं, धिक् स्पर्द्धां विधुरात्मनाम् ॥ ६ ॥ स्वभावसरला वीत–मत्सरा अपराः पुनः । प्रेक्ष्य पुण्यादरं तस्याः, प्रशंसामेव तन्वते ॥ ७ ॥ एवं समत्सरं धर्म्मं, कुन्तला कृतपूर्विणी । मृत्वार्त्तरौद्रध्यानाभ्यां, सा शुनी समपद्यत ॥ ८ ॥ सा पुनर्निजचैत्यस्य, द्वारे तिष्ठत्य-

---

१ "दानादि–" इत्यपि ॥

नारतम् । विवेकविकला रौद्र–परिणामातिनिर्दया ॥९॥ अन्येद्युः केवली कश्चित्, पुरे तत्र समागतः । सान्तःपुरोऽपि भूपस्तं, वन्दितुं भक्तितो ययौ ॥ १० ॥ केवली देशनां चक्रे, कर्णपीयूषसारणिम् । अन्तःपुर्योऽथ पृच्छन्ति, तं मुनिं विनयानताः ॥ ११ ॥ यदीयादरतोऽस्माक–मप्येष सुकृतादरः । भगवन् ! सा गता कुत्र, सपत्नी कुन्तलाभिधा ॥ १२ ॥ सोऽप्यब्रवीदियं हन्त, कृत्वा धर्म्मं समत्सरम् । उत्पन्ना कुर्कुरीत्वेन, मोहाच्चैत्येऽवतिष्ठते ॥ १३ ॥ एवं निशम्य ताः सर्वा–स्तत्रागत्य जिनालये । सोपहासं स कारुण्यं, तां पश्यन्ति मुहुर्मुहुः ॥ १४ ॥ पुरः प्रत्यहमेतस्याः, पूपिकादि क्षिपन्ति ताः । आलापयन्ति सस्नेहं, पुनस्तां कुर्कुरीमिति ॥ १५ ॥ अपि धर्म्मपरायास्ते, भद्रे ! मत्सर-दोषतः । ईदृकुयोनिरापन्ना, बलीयस्त्वं हि कर्म्मणाम् ॥ १६ ॥ ततो विमुच्य मात्सर्यं, रम्यं धर्मं समाचर । यतस्ते सुगतिप्राप्ति–र्बोधिश्च सुलभो भवेत् ॥१७॥ भूयो भूय इति श्रुत्वा, तासां वाक्यानि सा शुनी ।ईहापोहं वितन्वाना, जातिस्मरणवत्यभूत् ॥१८॥ ततः संवेगमापन्ना, पापमालोच्य पूर्वजम् । समक्षं सर्वसिद्धाना–माहारं त्यक्तवत्यसौ ॥१९॥ क्रमान्मृत्वाऽभवद्देवी, सौधर्म्मे द्युतिभासुरा । ततोऽपि सुगतिं यास्य–त्यसौ धर्म्मप्रभावतः ॥२०॥ श्रुत्वेति वृत्तान्तममुं स्वभावात्, भोः प्राणभाजः प्रथमानभावाः । मात्सर्यमुत्सार्य विवेकवन्तः, कुर्वन्तु पुण्यानि समाधिमन्तः ॥ २१ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे द्वाविंश उपदेशः ॥ २२ ॥

---

दस कर–पिहुच्च गंतुं भुवो पढमवप्पो । तो पन्नाधणुपयरो, तओ अ सोवाणपणसहसा ॥ ४ ॥ तो बीअवप्पो पन्न–धणुपयर सोवाणसहस पण तत्तो । तइओ वप्पो छस्सय–धणु इगकोसेहिंतो पीढं ॥ ५ ॥ चउदार तिसोवाणं, मज्झे मणिपीढयं जिणतणुच्चं । दो घणुसय पिहुदीहं, सड्ढदुकोसेहिं धरणियला ॥ ६ ॥ पविसिय पुव्वाइ पहू , पया-हिणं पुव्वआसणनिविट्ठो । पयपीढठवियपाओ, पणमिय तित्थं कहइ धम्मं ॥ ७ ॥"

धर्म्मोपदेशमेवं च, कुर्वाणे वीरतीर्थपे । आगात्तत्रत्यभूपोऽपि, देशनाकर्णनोन्मनाः ॥ १० ॥ वृद्धापि दुरवस्थान–स्थिता तां धर्म्मदेशनाम् । तदैव प्रक्रतां हृद्या–माद्यन्तावधि चाश्रृणोत् ॥ ११ ॥ जिनेशवाक्सुधामेवं, कर्णेहत्य निपीय सा । तादृक् शरीरजं कष्टं, न विवेद मनागपि ॥ १२ ॥ यतः—

"सव्वाउअंपि सोआ, खविज्ज जइ इह सयं जिणो कहए । सीउण्हखुप्पिवासा, परिस्समभएवि अगणंतो ॥ १ ॥"

सिन्दुवारादिपुष्पैस्तं, यजामीति विचिन्त्य च । यान्ती स्खलितपादाग्रा, प्राणानुज्झांचकार सा ॥ १३ ॥ सौध र्म्मकल्पे देवोऽभूत् , स्वस्वरूपमवेत्य च । आगत्य वीरपादान्ते, स देवो नाट्यमातनोत् ॥ १४ ॥ अत्यद्भुतं च तद्रूपं वीक्ष्य पप्रच्छ भूपतिः । किमेष सर्वदेवेष्व–प्यधिकद्युतिमान् विभो ! ॥ १५ ॥ तत्स्वरूपं यथाजातं, श्रीवीरोऽप्यखिलं जगौ । भूपादयश्चमच्चक्रु–स्तत्तादृक्श्रुतवार्त्तया ॥ १६ ॥ ततः प्रमोदाङ्कुरिताङ्गयष्टयो, भूपादयः स्थानमगुर्निजं निजम् ।

---

१ "सर्वदेवेभ्योऽ–" इत्यपि ॥

अन्यत्र वीरोऽपि विहारमातनोत्, भव्यास्तदेवं यजत श्रिये जिनान् ॥ १७ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे त्रयोविंश उपदेशः ॥ २३ ॥

---

विनापि भावं विहितः प्रणामो, जिनेषु न स्यादफलः कदापि ।
स दुःसुतः श्रेष्ठिवरस्य मीनो–ऽप्यापत् प्रबोधं यत उद्धतोऽपि ॥ १ ॥

अस्ति प्रशस्तविस्तारि–व्यवहारिगृहोत्करम् । क्षितिप्रतिष्ठितं नाम, पुरं सुरपुरोपमम् ॥ १ ॥ तत्रास्ति नामकर्म्मभ्यां, जिनदास इति श्रुतः । श्रेष्ठी श्रेष्ठतमानेक–श्रीणां विश्राममन्दिरम् ॥ २ ॥ द्यूतादिव्यसनी विद्या–विहीनः पशुसन्निभः । तनयः समभूत्तस्य, कुलकिम्पाकपादपः ॥ ३ ॥ समयं गमयामास, स तु धर्म्मं विनैव ही । धर्म्मैकचित्तः श्रेष्ठी तु, चिन्तयामासिवानिति ॥ ४ ॥ ममापि तनयो भूत्वा, गमिष्यत्येष दुर्ग्गतिम् । उपायं तदहं कुर्वे, येनैष सुगतिं व्रजेत् ॥ ५ ॥ उक्तं च—

"जो गिहकुडुंबसामी, संतो संमत्तरोवणं कुणइ । तेण सयलोऽवि वंसो, उद्धरिओ भवसमुद्दाओ ॥ १ ॥
जो गिहकुडुंबसामी, संतो मिच्छत्तरोवणं कुणइ । तेण सयलोऽवि वंसो, पक्खित्तो भवसमुद्दंमि ॥ २ ॥"

विमृश्येति गृहद्वारे, जैनीं मूर्त्तिमकारयत् । श्रेष्ठी हिताय पुत्रस्य, सन्तो हि परवत्सलाः ॥ ६ ॥ गतागतिं वित-

न्वानो, नीचैर्भूय बलादपि । तस्याः प्रणामं पुत्रोऽसौ, करोति स्मोद्धतोऽपि सन् ॥ ७ ॥ अथायुषः क्षये मृत्वा, मत्स्यो जातः स तत्सुतः । स्वयम्भूरमणे हाहा !, प्रमादस्य विजृम्भितम् ॥ ८ ॥ स्वैराचारपरस्तत्र, भ्रमन्नम्बुधिपाथसि । मीनं जैनाकृतिं दृष्ट्वा, जातिस्मरणवानभूत् ॥ ९ ॥ विमुच्य वलयाकारं, समस्ताकारधारिणः । महासमुद्रे विद्यन्ते, मत्स्या इति हि जैनगीः ॥ १० ॥ महामोहविमूढेन, मया ही मानुषो भवः । हारितः स क्व मे भावी—त्य-न्तस्तापं भृशं दधौ ॥ ११ ॥ तामेव प्रतिमां ध्याय—न्नाहारमशनादिकम् । परित्यज्य प्रपेदेऽसौ, स्वर्विमानमभङ्गु-रम् ॥ १२ ॥ ग्रन्थान्तरेऽप्युच्यते—

"तातादेशवशादपीह नृभवे न त्वं मयाराधित—स्तेनाहं भवसागरे निपतितोऽम्भोधौ महापातकी ।
तत्रायस्व जिनेन्द्र ! मामशरणं सर्वज्ञविम्बाकृते—र्मीनो मीनवरान्नमस्कृतिपरो जातिस्मृतेः स्वर्ययौ ॥ १ ॥"

इत्यभावकृतस्यापि, प्रणामस्य जिनेशितुः । श्रुत्वा फलं यतध्वं तत् , तत्रैव सततं जनाः ॥ १३ ॥

॥ इति श्रीउपदेशसप्ततिकायां प्रथमेऽधिकारे चतुर्विंश उपदेशः ॥ २४ ॥

---

इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिक्रमकमलमरालमहोपाध्यायश्रीचारित्ररत्नगणिविनेयपरमाणु-पण्डितसोमधर्म्मगणिविरचितायां श्रीउपदेशसप्ततौ पूजाचतुर्विंशतिकारूपः प्रथमोऽधिकारः ॥ १ ॥

---

# ॥ अथ द्वितीयः श्रीतीर्थाधिकारः प्रारभ्यते ॥

समुद्धरन्ति प्रथमानसम्मदाः, केऽपि स्ववित्तैर्जिनमन्दिराण्यपि ।
यथा कृतार्थद्रविणः स सज्जनः, श्रीनेमिचैत्यं गिरिनारपर्वते ॥ १ ॥

सुराष्ट्राविषये जाम्वा–पुत्रः सज्जनसंज्ञितः । श्रेष्ठी श्रीमालवंशीयः, सदा शुभमनोरथः ॥ १ ॥ नियुक्तः सिद्धराजेन, दण्डनायकतापदे । निवासं वामनस्थल्यां, कुरुते धर्म्मकर्मठः ॥ २ ॥ अन्यदा सिद्धराजेन्द्रो, गतो मालवनीवृति । तत्र द्वादशवर्षाणि, विग्रहं कृतवानसौ ॥ ३ ॥ तत्र चावसरे काष्ठ–मयो देवालयः परम् । अस्ति सोऽपि क्वचिज्जीर्णो, गिरिनारमहीधरे ॥ ४ ॥ पुरादृषन्मयोऽप्येष, रत्नश्राद्धेन कारितः । बौद्धैस्तीर्थमधिष्ठाय, कृतः काष्ठमयः पुनः ॥ ५ ॥ तादृशं चैत्यमालोक्य, सज्जनो दण्डनायकः । अम्बिकादेशतो वर्ष–द्विःषट्कोद्ग्राहितैर्धनैः ॥ ६ ॥ सद्देवकुलिकायुक्त–मुज्जयन्तस्य मूर्द्धनि । प्रोत्तुङ्गशिखरं नेमि–प्रासादं निरमापयत् ॥ ७ ॥ जयसिंहनृपोऽप्याशु, प्रत्यावृत्तोऽथ मालवात् । तत्रत्यं नृपतिं जित्वा, प्राप्तः श्रीदेवपत्तने ॥ ८ ॥ तत्र श्रीसोमनाथस्य, कृत्वा पूजादिकोत्सवान् । सर्वानाकारयामास, सुराष्ट्रीयाऽधिकारिणः ॥ ९ ॥ आयातास्तेऽपि तत्रैकः, परं नायाति सज्जनः । तद्वृत्तान्तश्च सर्वोऽपि, विज्ञप्तस्तैर्नृपाग्रतः ॥ १० ॥ तद्वृत्तश्रवणोद्भूत–प्रभूतक्रोधदुर्द्धरः । नृपः सज्जनमाह्वातुं, प्राहिणोदात्मनो जनान् ॥११॥ प्रीतः

प्रासादनिष्पत्त्या, नृपाह्वानाच्च भीतिमान् । अथाऽसौ सज्जनः सर्वा–नाह्वयन् व्यवहारिणः ॥ १२ ॥ उवाच यूयं गृह्णीध्वं, पुण्यं प्रासादसम्भवम् । यथादेशोत्थितं दण्डं, राज्ञे विश्राणयाम्यहम् ॥१३॥ विभज्य तेऽपि तस्मै तत् , तावद्द्रव्यं समर्पयन् । स्वस्थीभूतः सज्जनोऽथ, नृपान्तिकमगाद्द्रुतम् ॥ १४ ॥ रुष्टो नृपतिराचष्ट, क्व रे ! द्रम्माः समानय । शीघ्रं तानन्यथा दास्ये, रे दुष्ट ! तव मस्तकम् ॥ १५ ॥ सोऽपि विज्ञपयामास, निर्भीको नृपतिं प्रति । अस्ति न्यासीकृतं कोशे, द्रव्यं रैवतके मया ॥ १६ ॥ पादावधार्यतां तत्र, यथा तद्दर्शयाम्यहम् । गिरिनारस्य माहात्म्यं, यतो लोकेऽपि पठ्यते ॥ १७ ॥ उज्जयन्तगिरौ रम्ये, माघे कृष्णचतुर्दशी । तस्यां जागरणं कृत्वा, सञ्जातो निर्मलो हरिः ॥ १८ ॥ पद्मासनसमासीनः, श्याममूर्त्तिर्दिगम्बरः । नेमिनाथः शिवेत्याख्यां, नाम चक्रेऽस्य वामनः ॥ १९ ॥

लोकोत्तरेऽपि—

"षड्विंशतिविंशतिपो–डशदशद्वियोजनधनुःशतोच्चशराः । अवसर्प्पिणीषु यः खलु, स जयति गिरिनारगिरिराजः ॥ १ ॥
यदतीतचतुर्विंशति–नमीश्वराद्या इहाऽष्ट जिनपतयः । कल्याणकत्रिकमापुः, स जयति गिरिनारगिरिराजः ॥ २ ॥
श्री ब्रह्मेन्द्रकृतेयं, श्रीनेमेर्मूर्त्तिरमरगणपूज्या । विंशतिसागरकोटी, स जयति गिरिनारगिरिराजः ॥ ३ ॥"

श्रुत्वेति सपरिवारो, गतो रैवतके नृपः । चैत्यमत्यद्भुतं दृष्ट्वा, कोऽस्य कारयितेत्यवक् ॥ २० ॥ सज्जनोऽपि जगौ कर्ण–भूपालकुलचन्द्रमाः । अस्य कारयिता देव !, जयसिंहनरेश्वरः ॥ २१ ॥ इदमुद्ग्राहितं देव !, देशस्येत्यवधारय ।

भूपोऽप्याह ममादेशं, विना कारितवान् कुतः ?॥ २२ ॥ उवाच सज्जनः चैत्य–पुण्यैकस्पृहयालवः। अमी तव प्रसादेन, समृद्धा व्यवहारिणः ॥ २३ ॥ तव द्रम्मान् प्रदास्यन्ति, तन्मह्यं कुप्य मा विभो !। द्रम्मान्वा चैत्यपुण्यं वा, रोचते यद्गृहाण तत् ॥ २४ ॥ इत्युक्ते भूपतिः प्राह, चैत्यपुण्यं तदस्तु मे । मन्नाम्नैव परं वाच्यः, प्रासादः सोऽपि तं जगौ ॥ २५ ॥ प्रासादो देवपादानां, सर्वोऽप्येष विजृम्भते । मम रङ्कस्य किं नाम, कीर्त्तनं कीर्त्तिकारकम् ॥२६॥ ततो भृशतमां तुष्ट–स्तस्मै पुण्यवते नृपः । पुनः समर्प्य व्यापारं, स्वयं श्रीपत्तने ययौ ॥ २७ ॥ सज्जनोऽपि ततो भक्त्या, पट्टकूलमयं ध्वजम् । आरभ्य रैवतात् शत्रु–ञ्जयं यावद्वितीर्णवान् ॥ २८ ॥ बाणाष्टरुद्र[1]प्रमिते, ११८५ वर्षे विक्रमभूपतेः । अचीकरदिदं चैत्यं सज्जनो दण्डनायकः ॥ २९ ॥ कोटिर्लक्षैर्द्विसप्तत्या, युक्ता तेन व्ययीकृता । जीर्ण-नाणकटङ्काना–मत्रेत्याहुर्बहुश्रुताः ॥ ३० ॥

सप्तक्षेत्र्यां वित्तमेवं नियोज्य, श्रीमान्धर्म्मस्थाननिर्मापणेन ।
भावी नूनं सज्जनः श्रेष्ठिराजः, पुण्यप्राज्योऽनुक्रमान्मोक्षगामी ॥ ३१ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे प्रथम उपदेशः ॥ १ ॥

---

१ –"करुद्रप्रमिते" इत्यपि ॥

आत्मीयतातप्रतिपन्नमर्थं, ये निर्वहन्ते तनयास्त एव । अमात्यमुख्योदयनस्य पुत्रौ, श्रीवाग्भटश्चाम्रभटो यथैव ॥ १ ॥

मरुमण्डलतो देवा–देशात्कर्णावतीं पुरीम् । प्राप्य जागरिते भाग्ये–ऽप्राप्तपूर्वी महानिधिम् ॥ १ ॥ नीतः श्रीसिद्धराजेन, सर्वामात्येषु मुख्यताम् । अभूदुदयनो मन्त्री, पुण्यकार्यधुरंधरः ॥ २ ॥ युग्मम् ॥ आदिष्टः सोऽन्यदा तेन, जेतुं सुंसुरभूपतिम् । गच्छन् सुराष्ट्राविषये, प्राप शत्रुञ्जयं गिरिम् ॥ ३ ॥ तत्र दारुमये चैत्ये, पाण्डवैः कारिते जिनान् । वन्दमानो ददर्शाखु–गृहीतां दीपवर्त्तिकाम् ॥४॥ अत्राप्युपद्रवो माऽभूत्, इति प्रासादकारणे। भूशय्याब्रह्मचर्य्याद्या–ऽभिग्रहानग्रहीदसौ ॥ ५ ॥ ततो गतः पुनस्तत्र, सञ्जाते घोरसङ्गरे । प्रहारजर्जरीभूतो, जगाद निजसेवकान् ॥ ६ ॥ शत्रुञ्जये भृगुपुरे, गिरिनारगिरौ तथा। प्रासादपद्यविषया, अभूवन्मे मनोरथाः ॥ ७ ॥ अहं तु प्राप्तवान् प्रान्ता–वस्थामस्थिरजीवितः । किं कुर्वे साम्प्रतं यद्वा, परतन्त्रा नियोगिनः ॥ ८ ॥ निवेदनीया युष्माभि–स्तेनामी मे मनोरथाः । पुत्रयोरिति सम्भाष्य, स्वोत्तमार्थमसाधयत् ॥ ९ ॥ अथ तैः पत्तनप्राप्तै–स्तत्स्वरूपे निवेदिते । शत्रुञ्जयोद्धारकृत्यं, वाग्भटः प्रतिपन्नवान् ॥ १० ॥ ततः श्रीवाग्भटो मन्त्री, चैत्यनिर्मापणेच्छया । जगाम सपरिवारः, श्रीशत्रुञ्जयपर्वते ॥ ११ ॥ तत्र निर्माप्यमाणेऽथ, प्रासादे व्यवहारिणः । अर्प्पयन्ति स्म नैकानि, स्वस्वद्रव्याणि मोदतः ॥१२॥ उक्तं च—

"एगंपि उदगबिन्दुं, जह पक्खित्तं महासमुद्दंमि । जायइ अक्खयमेवं, पूआवि हु वीयरागस्स ॥ १ ॥"

मन्त्री तेषां तु नामानि, लिखति क्रमशस्ततः । प्रभूतः समुदायस्तु, मिलितस्तत्र विद्यते ॥ १३ ॥ तत्र चावसरे

लोचनः ॥ २६ ॥ नूनं तीर्थप्रभावोऽयं, वराकस्य न मे पुनः । विमृश्येत्युत्सुको गत्वा, मन्त्रिणे तं समर्पयत् ॥ २७ ॥ मन्त्र्यपि प्राह भो भद्र !, तुष्टस्तव कपर्दिराट् । दत्ते स्म तदमुं भुङ्क्ष्व, यथाकामं सुखी भव ॥ २८ ॥ सोऽपि तं सर्वथाऽनिच्छन् , समर्प्य स्वाश्रयं ययौ । एवं पुनः पुनस्तस्या–ऽभवत्पुण्यप्रभावतः ॥ २९ ॥ ततः ससमवेलायां, बलादर्द्धं समर्पितम् । मन्त्रिणा तस्य सञ्जातः, सोऽपि सौख्यैकभाजनम् ॥ ३० ॥ क्रमेण पूर्णतां प्राप्तः, प्रासादोऽपि स मन्त्रिणः । तत्र द्रव्यप्रमाणं तु, वृद्धाः प्राहुरिदं पुनः ॥ ३१ ॥ लक्षत्रयी विरहिता द्रविणस्य कोटी–स्तिस्रो विविच्य किल वाग्भटमन्त्रिराजः । यस्मिन्युगादिजिनमन्दिरमुद्दधार, श्रीमानसौ विजयतां गिरिपुण्डरीकः ॥ ३२ ॥

इति स्वतातप्रतिपन्नतीर्थ–जीर्णोद्धृतिं मन्त्रिपतिर्विधाप्य ।
श्रीपत्तनं प्राप्य मतं जिनानां, प्रभावयन् श्रावकपुङ्गवोऽभूत् ॥ १ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे द्वितीय उपदेशः ॥ २ ॥

---

अथाम्रदेवोऽपि पितुर्निजस्य, श्रेयोनिमित्तं पुनरुद्दिधीर्षुः । शकुन्तिचैत्यं भृगुकच्छनाम्नि, पुरे गतो भूरिपरिच्छदेन ॥ १ ॥ येन त्रिषष्टिलक्षाभि–ष्टङ्ककानां व्यधाप्यत । गिरिनारगिरौ पद्या, स श्लाघ्यो भुवनत्रये ॥ २ ॥ मल्लिकार्जुनराजेन्द्रं, जीत्वा प्रौढपराक्रमैः । रत्नाष्टकेन सुप्रीतं, भूपतिं यश्चकार च ॥ ३ ॥ तच्चेदम्—

शृङ्गारकोटिशाटिका १ गरलहरसिप्रा २ श्वेतो हस्ती ३ पात्राणामष्टोत्तरं शतं ४ द्वात्रिंशन्मूटका मौक्तिकानाम् ५ घटिशतमितः कनककलशः ६ अग्निधौतोत्तरपटः ७ मल्लिकार्जुनशिरश्च ८ ।

अथ श्रीमच्छकुनिका-विहारारम्भहेतवे । भूमिं कर्म्मकरैस्तत्र, खानयामास धीसखः ॥ ४ ॥ भूम्यधिष्ठायिका काचिद्, व्यन्तर्यन्येद्युरुद्यतान् । रजोभिः स्थगयामास, गर्त्तायां खनकान्नरान् ॥ ५ ॥ असमञ्जसमुद्वीक्ष्य, तदिदं सकृपो हृदि । सह पुत्रकलत्राभ्यां, मरणे कृतनिश्चयः ॥ ६ ॥ मन्त्री तत्रैव गर्त्तायां, दत्ते झम्पां हि यावता । तावत्तत्साहसात्तुष्टा, व्यन्तरी तमभाषत ॥ ७ ॥ इयं मदीया भो भूमि-र्मामसन्तोष्य यत्त्वया । प्रारम्भः कारितस्तत्ते, विघ्न एष कृतो मया ॥ ८ ॥ अधुना तव सत्त्वेन, तुष्टाहं तद्वरं वृणु । मन्त्र्याह तर्हि जीवन्तु, सर्वे कर्म्मकरा अमी ॥ ९ ॥ पुनर्जीवितमेतेषां, सार्द्धं तव मनोरथैः । भावीत्युक्त्वा गता देवी, मन्त्र्यपि प्राप सुस्थताम् ॥ १० ॥ गतेऽथ तत्र प्रत्यूहे, प्रासादं परिपूर्णताम् । स मन्त्री प्रापयामास, समं सर्वमनोरथैः ॥ ११ ॥ ततः प्रतिष्ठाकार्यार्थं, प्रीत्या तेन निमन्त्रितौ । नृपतिर्हेमसूरिश्च, तत्र प्रापतुराश्रमम् ॥ १२ ॥ आजग्मुर्भूरिशस्तत्र, व्यवहारिपरम्पराः । सोऽपि सन्तोषयामास, तान्वस्त्राभरणादिभिः ॥ १३ ॥ श्रीहेमसूरिभिस्तत्र, प्रतिष्ठा विस्तराः कृताः । मन्त्रिराजोऽप्यर्थिवर्गं, महादानैरतूतुपत् ॥ १४ ॥ आरात्रिकाद्यवसरे, सर्वाङ्गाभरणान्यपि । ददानं याचकेभ्यस्तं, स्तुवन्ति स्मेति सूरयः ॥ १५ ॥

"किं कृतेन न यत्र त्वं, यत्र त्वं किमसौ कलिः । कलौ चेद्भवतो जन्म, कलिरस्तु कृतेन किम् ॥ १ ॥"

तद्विशेषदानं पुनः—

"द्वात्रिंशद्द्रम्मलक्षा भृगुपुरवसतेः सुव्रतस्यार्हतोऽग्रे, कुर्वन्मङ्गल्यदीपं ससुरनरवरश्रेणिभिः स्तूयमानः ।
योऽदादर्थिव्रजस्य त्रिजगदधिपतेः सद्गुणोत्कीर्त्तनायां, स श्रीमानाम्रदेवो जगति विजयतां दानशौण्डाग्रयायी ॥ १ ॥
पुहविकरंडे बंभंड-संपुडे भमई कुण्डलिज्जंतु । तुह अंबडदेव जसो, अलद्धपसरो भुअंग व्व ॥ १ ॥"

लक्षदानम् ॥

इत्यादिदानलीलाभिः, केषां श्लाघ्योऽभवन्न सः । औदार्यात्कोऽथवा न स्यात्, ख्यातिपात्रं सुरद्रुवत् ॥ १६ ॥ अन्यदा मन्त्रिराजस्य, दोषो मुदितचेतसा । प्रासादे नृत्यतः क्रूर-व्यन्तरीजनितोऽभवत् ॥ १७ ॥ तेन दूषितसर्वाङ्गो, हसन् गायन् पठन् रुदन् । प्राप्तः प्रान्तदशां मन्त्री, कर्म्मणां हि विचित्रता ॥ १८ ॥ अवधार्य स्वरूपं तत्, प्रभु-श्रीहेमसूरयः । क्षणात्तत्राऽऽगताः प्रेक्षां-चक्रुस्तं च तथाविधम् ॥ १९ ॥ योगिन्योऽत्र चतुःषष्टि-संख्यास्तास्वपि सैन्धवा । व्यन्तरी प्रथमा तेन, तस्याः कार्यमिदं खलु ॥ २० ॥ विभाव्येत्यनुनेतुं तां, कायोत्सर्ग्गं वितेनिरे । तत्प्रासादे यशश्चन्द्र-गणिना सह सूरयः ॥ २१ ॥ आकृष्य जिह्वां देवी तु, तान् भापयति सैन्धवा । प्रहारान् मौशलांस्तत्र, यशश्चन्द्रगणिर्ददौ ॥ २२ ॥ प्राच्यप्रहारे प्रासादे, प्रकम्पः समभून्महान् । दत्ते यावद्द्वितीयं तु, प्रहारं प्राणघातकम् ॥ २३ ॥ तावत्सा सैन्धवाऽभ्येत्य, गुरुपादान् व्यजिज्ञपत् । वज्रपातप्रहारेभ्यो, भगवन् ! रक्ष रक्ष माम्

॥ २४ ॥ तर्जिता गुरुभिर्भीता, क्षमयित्वा च तानियम् । स्वस्थानमगमज्जातः, सचिवोऽपि निरामयः ॥ २५ ॥
इत्थमुल्लाघ्य तं मन्त्रि-पुङ्गवं गुरुकुञ्जराः । इति स्तुतिं व्यधुर्गत्वा, प्रासादे सुव्रतेशितुः ॥ २६ ॥

संसाराण्र्णवसेतवः शिवपदप्रस्थानदीपाङ्कुराः, विश्वालम्बनयष्टयः परमतव्यामोहकेतूद्गमाः ।
किं वाऽस्माकमनोमतङ्गजदृढालानैकलीलाजुष-स्त्रायन्तां नखरश्मयश्चरणयोः श्रीसुव्रतस्वामिनः ॥ १ ॥

सूरीन्द्राः पत्तनं प्रापु-र्मन्त्रिणा बहुमानिताः । सचिवोऽपि चिरं धर्म-प्रभावादभवत्सुखी ॥ २७ ॥

एवं गुणश्रेणिमनोहराणां, प्रभावकश्रावकपुङ्गवानाम् ।
श्रुत्वा कथाः श्रीजिनमन्दिरादि-क्षेत्रेषु वित्तानि वपन्तु भव्याः ! ॥ २८ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे तृतीय उपदेशः ॥ ३ ॥

---

धन्याः पुमांसः स्पृहयालवः शिवं, निर्म्मापयन्त्यार्हतमन्दिराण्यपि ।
यथा स मन्त्री विमलोऽर्बुदे गिरौ, युगादिचैत्यं निरमापयत्सुधीः ॥ १ ॥

श्रीउज्जयन्तार्बुदयोः, स्वैरं कृतनिवासयोः । अम्बाश्रीमातयोरासी-त्सख्यमक्षय्यमन्यदा ॥ १ ॥ श्रीमातयाऽम्बिका प्रोक्ता, त्वमत्रागच्छ हे सखि ! । निर्वियोगं यथा क्रीडा, भवत्यनिशमावयोः ॥ २ ॥ अम्बा प्राह विना जैन-

प्रासादं मम न स्थितिः । श्रीमाताप्याह भूरस्ति, चम्पकासन्नवर्त्तिनी ॥ ३ ॥ सप्तविंशतिलक्षाभि-र्द्रम्माणां परिपूरिता । चैत्यस्यार्हो परं तस्य, कोऽपि कारयिता यदि ॥ ४ ॥ इति द्रव्ययुतां भूमि-माकर्ण्याम्बा प्रमोदतः । चैत्यनिर्मापकं शीघ्र-मानेष्यामीति तां जगौ ॥ ५ ॥ चतुश्चत्वारिंशदग्र-चतुःशतमिता बभुः । प्रासादा आर्हता यस्यां, शैवा नवशतीमिताः ॥ ६ ॥ तस्यां चन्द्रावतीपुर्यां, भीमभूपपमानितः । आगत्य कुरुते राज्यं, विमलो दण्डनायकः ॥ ७ ॥ अब्ध्यष्टसंख्य ८४ वरजाङ्गिकढोल्लवृन्दे, यस्याऽधिकारिपुरुषैः परिताड्यमाने । भुक्तेः क्षणे भजति भीमनृपस्य हैम-स्थालं विशालमपि चञ्चलतामतीव ॥ ८ ॥ यो द्वादश सुरत्राणान्, जित्वा कटकपेटकैः । तेभ्यः छत्राणि तावन्ति, जग्राह स्वैकलीलया ॥ ९ ॥ सम्यग्यत्कटके धान्य-व्ययसंख्या न लभ्यते । प्रतिप्रयाणकं त्रिघ्न-सप्तलक्षव्ययः परम् ॥ १० ॥ तीर्थस्थापनसन्तान-सस्पृहो विमलाऽधिपः । अम्बामाराधयामास, भक्तितोऽवसरे तदा ॥ ११ ॥ ततः प्रत्यक्षतां प्राप्ता, देवी तं प्राह मन्त्रिणम् । तव नास्ति द्वयी प्राप्ति-स्तत्त्वं वद यथारुचि ॥ १२ ॥ सन्ततिं पापहेतुत्वा-दनादृत्य स धीसखः । प्रासादं प्रार्थयाञ्चक्रे, सात्त्विकानां शिरोमणिः ॥ १३ ॥ भूमिं निवेद्य तां द्रव्ययुतां देवी तिरोदधे । प्रासादारम्भसंरम्भं, सचिवोऽपि न्यधापयत् ॥ १४ ॥ मन्त्रिणा कार्यमाणेऽथ, प्रासादेऽर्बुदमूर्द्धनि । श्रीमातापूजकाः किन्तु, न चैत्याऽनुमतिं ददुः ॥ १५ ॥ पुरा कदापि नाऽत्राभूत्, श्रीजिनायतनं खलु । तत्सम्प्रत्यपि जैनेन्द्रं, चैत्यमत्र कथं भवेत्? ॥ ७६ ॥ पुनः स्मृत्वाऽम्बिकां मन्त्री, तद्वृत्तं प्राह तत्पुरः । साप्याह या

एवं प्रासादे सम्पूर्णे जाते केनापि चारणेनोक्तम्—

मांडीमरकीरइ करओ, छंडउं मंसगाह । विमलडि खंडउं कड्ढिउं, नट्ठउ वालीनाह ॥ १ ॥

एवं विहाराः परमेश्वराणां, निर्मापणीया निजवित्तमानात् ।
भो भव्यलोकाः ! भवतां यथा जग–त्क्रोडे सदा क्रीडति शाश्वतं यशः ॥ १ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे चतुर्थ उपदेशः ॥ ४ ॥

---

प्रासादं श्रीअर्हतां कारयन्तो, धन्याः पुण्यां सम्पदं प्राप्नुवन्ति ।
दृष्टान्तोऽत्र स्पष्यते कोविदेन्द्रै–र्मन्त्री तेजःपालनामास्ति केन्द्रः ॥ १ ॥

श्रीवीरधवलक्ष्माप–राज्ये व्यापारकारिणौ । श्रीवस्तुतेजःपालाख्या–वभूतां गुर्ज्जराभुवि ॥ १ ॥ श्रुत्वैकदा श्रीविमल–स्फीतकीर्त्तनमर्बुदे । उन्मना वस्तुपालोऽभूत्, तत्र तत्कारणेच्छया ॥ २ ॥ ततः श्रीवस्तुपालेन, तेजःपालाय भाषितम् । स्वभ्रातृलूणिगश्रेयः–कृते चैत्यं विधाप्यते ॥ ३ ॥ स्वप्रान्तसमये प्रोक्त–मप्यभूल्लूणिगेन यत् । चेद्वः सम्पद्यते सम्प–चैत्यमेकं तदाऽर्बुदे ॥ ४ ॥ निर्मापणीयं मन्नाम्ना, तदा निर्द्धनताऽभवत् । इदानीं सम्पदोऽमुष्याः, फलं कस्मान्न गृह्यते ॥ ५ ॥ युग्मम् ॥ प्रतिश्रुत्य स तद्वाक्यं, विनीतः क्षितिपाज्ञया । समं समग्रसामग्र्या, ययौ चन्द्रा-

वतीं पुरीम् ॥ ६ ॥ धारावर्षनृपस्तत्र, तोषितस्तेन मन्त्रिणा । प्रासादकारणाऽऽदेशं, यथा सद्यः स दत्तवान् ॥ ७ ॥ अथाऽर्बुदगिरौ गत्वा, तेजःपालेन याचिताः । श्रीमाताबोटिकाः प्रौढ–प्रासादार्हां वसुन्धराम् ॥ ८ ॥ तेऽप्यूचुर्यावती भूमि–र्द्रम्मैः पूरयितुं त्वया । शक्यते तावती ग्राह्या, नान्येत्युल्लुण्ठवादिनः ॥ ९ ॥ अङ्गीकृत्य तदप्येष, द्रम्मैः पूरयितुं भुवम् । समारभत धीराणां, लक्ष्मीर्यच्छुभकर्म्मणे ॥ १० ॥ ततः प्रस्तृणता तेन, द्रम्मान्भुवि कणानिव । षट्त्रिंशन्मूटकास्तेषां, तत्र प्रसारिताः क्षणात् ॥ ११ ॥ द्वाषष्टिलक्षद्विपंक्ति–सहस्रार्धशतप्रमाः । अत्र द्रम्माः स्युराश्रित्य, वीसलप्रियनाणकं ॥ १२ ॥ अथ तेऽप्यूचिरे मन्त्रि–न्नग्राह्या भूरतः परम् । धनवांस्त्वं हि गृह्णीयाः, शैलमप्यविलम्बितम् ॥ १३ ॥ किञ्चायतौ हितमभूत्, यतोऽद्यापि न दृश्यते । प्रासादेऽत्र करः कोऽपि, द्युम्नक्रीतत्वतो भुवः ॥ १४ ॥ इदं च मन्त्रयित्वैव, प्रथमं मन्त्रिपुङ्गवः । व्यधत्त नोचेज्जायेत, चैत्यं हि करभारितम् ॥ १५ ॥ एवं भुवं गृहीत्वाऽसौ, श्रीमदारासणे गतः । तत्र चैत्यकृते भूरि–प्रस्तरान् निरकाशयत् ॥ १६ ॥ ततोऽर्बुदं यावदसौ, प्रतिगव्यूतमादरात् । सुप्रापसर्ववस्तूनि, ग्रामेष्वट्टान्यकारयत् ॥ १७ ॥ क्षुदादिकृच्छ्रं मा भूयात्, पशूनामथवा नृणाम् । विमृश्येति व्यधादेवं, मन्त्री सर्वोपकारकृत् ॥ १८ ॥ अथो रथकलैः प्रौढैः, प्रापयत् प्रस्तरानयम् । पद्मयोम्बरिणीग्राम–सत्कयाऽर्बुदमूर्द्धनि ॥ १९ ॥ उदाख्यं च निजं श्यालं, कर्मस्थाने न्ययोजयत् । अर्थव्यये यदृच्छत्वं, समादीक्षत्स धीसखः ॥ २० ॥ शोभनप्रमुखाः सूत्र–धाराः सप्तशतीमिताः । घटयन्तीत्यादिसूत्रं, कृत्वा स स्वपुरं गतः ॥२१॥

ततो निष्पद्यते चैत्यं, सूत्रधाराः पुनः पुनः । वृत्तं गृह्णन्ति दुःशीलाः, कर्मस्थायात्पुरः पुरः ॥ २२ ॥ ततो विज्ञापयामास, श्यालको मन्त्रिणं प्रति । विनाशितास्तव द्रम्माः, सूत्रधारैरशेषतः ॥ २३ ॥ लेखेन ज्ञापयाञ्चक्रे, तेजःपालेन तं प्रति । द्रम्माः किं कुथिता येन, विनष्टा इति भाषसे ॥ २४ ॥ स्वमातृवन्ध्यतावाक्य–वदिदं निष्फलं वचः । उपकारकरा द्रम्माः, किन्तु जाता इति वचः ॥ २५ ॥ शृणु तत्त्वमिदं तस्मा–द्विनीतेन त्वया सदा । न कार्यः सूत्रधाराणा–मिच्छाच्छेदः कदाचन ॥ २६ ॥ यावदिच्छं ततो दत्ते, चैत्यं गर्भगृहावधि । निष्पन्नं नेमिबिम्बं च, कषोपलमयं तथा ॥ २७ ॥ इदमावेदयाञ्चक्रे, मन्त्रिणोरूदिलः पुनः । तावत्युत्फुल्लनेत्रास्यौ, मिथः प्रीतौ बभूवतुः ॥ २८ ॥ अथाल्पपरिवारेण, तेजःपालोऽर्बुदे गिरौ । गतोऽनुपमया सार्द्धं, प्रासादस्य दिदृक्षया ॥ २९ ॥ प्रतिष्ठाप्रमुखानेक–प्रौढोत्सवपरम्पराः । न्यधापयत्तत्र मन्त्री, महादानपुरस्सरम् ॥ ३० ॥ अन्यदाऽनुपमा प्राह, शोभनस्थपतिं प्रति । विलम्बो जायते भूयान् , प्रासादे हेतुरत्र कः ॥ ३१ ॥ शीतकालो गीरेः शृङ्गं, दिनोऽल्पो भोजनादिकाः । क्रियास्तत्रापि कर्त्तव्याः, कर्म्मस्थायस्ततोऽल्पकः ॥ ३२ ॥ विलम्बस्य भयं किं चे–न्मन्त्रिपादाश्चिरायुषः । साप्याह नैव वक्तव्यं, दुर्लक्ष्या ह्यायतिः खलु ॥ ३३ ॥ श्रियो वा स्वस्य वा नाशो, येन विश्वं विनश्वरम् । तथापि जन्तवः स्थैर्य–बुद्धिं बध्नन्ति तत्र किम् ॥ ३४ ॥ ततो बुद्धया विभज्यैषा, दिनरात्र्योः पृथक् पृथक् । स्थपतीन्निखिलांस्तत्र, कर्म्मस्थाये न्ययोजयत् ॥ ३५ ॥ लक्षैस्त्रियुक्तपञ्चाश–त्प्रमितैरधिका इह । चैत्ये व्ययीकृतास्ताभ्यां, द्वादशद्रव्यकोटयः ॥ ३६ ॥

एवं [१२८६]रसाष्टरविसम्मितवत्सरे तं, प्रारभ्य [१२९६]नेत्रनवयुग्मरसामितेऽब्दे
सम्पूर्णतां जिनगृहं नयतः स्म हर्षा–त्तौ मन्त्रिणौ सकलधर्म्मधुराधुरीणौ ॥ १ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे पञ्चम उपदेशः ॥ ५ ॥

---

श्रीजीरिकापल्लिपुरीनितम्बिनी, कण्ठस्थले हारतुलां दधाति यः ।
प्रणम्य तं पार्श्वजिनं प्रकाश्यते; तत्तीर्थसम्बन्धकथा यथाश्रुतम् ॥ १ ॥

पुरा नन्दाभ्रेश ११०९ संख्ये, वर्षे ब्रह्माणनामनि । महास्थाने भूरिजैन–शैवप्रासादसुन्दरे ॥ १ ॥ महेभ्यो धान्धलो नामा–ऽभवच्छ्रावकपुङ्गवः । एका च स्थविरा तत्र, वसति स्म गतस्मया ॥ २ ॥ तदीया सुरभी चैका, क्षीरं क्षरति नित्यशः । सेहिलीसिन्धुपार्श्वस्थ–देवीत्रीगिरिगह्वरे ॥ ३ ॥ सन्ध्यायां मन्दिरे प्राप्ता, दुग्धं दत्ते न किञ्चन । पारम्पर्यात्तया ज्ञातं, तच्च स्थानं कियद्दिनैः ॥ ४ ॥ मुख्यानां धान्धलादीनां, तं वृत्तान्तं जगाद सा । तेऽपि सप्रत्ययं स्थान–मिति चेतस्यचिन्तयत् ॥ ५ ॥ पवित्रीभूय ते रात्रौ, सम्भूय व्यवहारिणः । पुण्यस्थाने स्वपन्ति स्म, स्मृत्वा पञ्चनमस्कृतिम् ॥ ६ ॥ एको नीलाश्वमारूढो, नरः कोऽपि सुरूपभृत् । तेषां पुरो जगादेति, स्वप्ने शुचिवचस्तदा ॥ ७ ॥ यत्र सा क्षरति क्षीरं, धेनुस्तत्राऽस्ति संस्थिता । मूर्त्तिः श्रीपार्श्वनाथस्य, तदधिष्ठायकस्त्वहम् ॥ ८ ॥ यथा

तस्या भवेत् पूजा, भवद्भिः क्रियतां तथा । इत्युक्त्वाऽन्तर्दधे देव–स्तेऽपि तत्र गताः प्रगे ॥ ९ ॥ भूमिं खनित्वा तां मूर्त्तिं, रथे संस्थापयन्ति ते । यावत्तावत्समायाता, जीरापल्लीपुरीजनाः ॥ १० ॥ तेऽभ्यधुर्भवतां कोऽयमस्थानेऽत्र समागमः । अस्मत्सीमस्थितं विम्वं, युष्माभिर्गृह्यते कुतः ॥ ११ ॥ एवं विवादे सञ्जाते, वृद्धास्तत्र बभाषिरे । एको वोऽस्माकमेकश्च, नियोज्येतां वृषावुभौ ॥ १२ ॥ यत्र तौ नयतस्तत्र, देवो यातु निजेच्छया । भवतां किं विवादेन, कर्म्मबन्धैकहेतुना ॥ १३ ॥ तथाकृते च तद्बिम्वं, जीरापल्ल्यां समागतम् । तत्प्रवेशोत्सवश्चक्रे, महानेव महाजनैः ॥ १४ ॥ पुरा चैत्ये स्थितं वीर–विम्बमुत्थाप्य निर्मितम् । तदेव मुख्यं सङ्घेन, सर्वानुमतिपूर्वकम् ॥ १५ ॥ आयान्त्यनेकशः सङ्घाः, विविधाऽभिग्रहैर्युताः । पूर्यन्ते प्रत्ययास्तेषां, तदधिष्ठायकेन च ॥ १६ ॥ एवं च तीर्थं तज्जातं, कुरुते धान्धलः पुनः । देवद्रव्यस्य चिन्तां तु, सर्वेभ्येषु धुरन्धरः ॥ १७ ॥ जावालिपुरतस्तत्र, यवनाऽनीकमेकदा । आगतं तत्र देवेना–ऽश्ववारीभूय नाशितम् ॥ १८ ॥ मुनिवेशभृतः सप्त, शेखाः कटकमध्यतः । प्रासास्तद्गुरवस्तत्रं, भृत्वा रुधिर-कुम्पकान् ॥ १९ ॥ देवस्तुतिमिषाद्देव–गृहे ते वासकं स्थिताः । क्षिप्त्वा रक्तच्छटा रात्रौ, मूर्त्तिभङ्गं वितेनिरे ॥ २० ॥ रक्तस्पर्शेऽपि देवानां, प्रभा यातीति शास्त्रगीः । नष्टास्तदैव ते पापाः, स्वस्थता नहि तादृशाम् ॥ २१ ॥ निरीक्ष्य तत्कृतं प्रात–स्तत्तादृगसमञ्जसम् । विषादो धान्धलादीनां, प्रभूतो हृदयेऽभवत् ॥ २२ ॥ वराकास्ते तु सप्तापि, शेखास्तत्रत्यभूभुजा । विनाशिता भटान्प्रेष्य, चमूस्तु स्वपुरङ्गता ॥ २३ ॥ अथ देवोऽवदत्तसो–पवासं स्वाधिकारिणम् ।

खेदं मा कुरु निःशूके, मयापि न विभूयते ॥ २४ ॥ संयोज्यैतानि खण्डानि, नवापि क्षिप सत्त्वरम् । नवसेरप्रमाणाया–स्त्वमन्तर्लेपनश्रियः ॥ २५ ॥ कपाटयुगलं देहि, दिनान् ससेति तद्वचः । श्रुत्वा स गौष्टिकः सर्वं, तत्तथैव विनिर्म्ममे ॥ २६ ॥ ससमे दिवसे ताव–देकः सङ्घः समागतः । औत्सुक्योद्घाटितद्वारं, यावत्सार्चा निरीक्ष्यते ॥ २७ ॥ तावत्सा किञ्चिदश्लिष्टा–ऽवयवा वीक्षिता जनैः । तदङ्गे नवखण्डी य–त्स्फुटाऽद्यापि विलोक्यते ॥ २८ ॥ गृहप्रदीपनद्रव्य–विनाशाद्या उपद्रवाः । साखीनां च तदा तेषां, प्रासानां स्वपुरेऽभवन् ॥ २९ ॥ तत्सर्वं तत्कृतं ज्ञात्वा, भीतो भूपः स्वमन्त्रिणम् । प्राहिणोत्तत्र देवोऽपि, स्वप्ने तमिति चावदत् ॥ ३० ॥ अत्रागत्य नृपोऽयं चेत्, स्वशिरो मुण्डयिष्यति । तदैव कुशलं भावि, नगरस्य नृपस्य च ॥ ३१ ॥ तथैव करणान्नैक–भोगयोगविधापनात् । प्राज्यप्रभावनाभिश्च, स भूपोऽभूत्समाधिमान् ॥ ३२ ॥ अन्यैरपि तथारब्धं, स्वशिरोमुण्डनादिकम् । गतानुगतिको लोकः, सर्वो यस्मान्निरीक्ष्यते ॥ ३३ ॥ एवं चटत्प्रकर्षेऽस्मिं–स्तीर्थे माहात्म्यभासुरे । देवोऽन्यदावदत्स्वप्ने, स्वाधिकारिनरं प्रति ॥ ३४ ॥ मम नाम्नैव देवस्य, मूर्त्तिरन्या निवेश्यताम् । क्षताङ्गा सा यतो मुख्य–स्थाने शोभा बिभर्त्ति न ॥ ३५ ॥ ततः श्रीपार्श्वनाथस्य, मूर्त्तिर्नव्या निवेशिता । याद्यापि पूज्यते लोकै–र्लोकद्वयफलार्थिभिः ॥ ३६ ॥ प्राचीनप्रतिमा तस्य, सव्यपार्श्वे निवेशिता । यस्याः पूर्वं नमस्कार–ध्वजार्चादि विधीयते ॥ ३७ ॥ एष दादाभिधः पार्श्वो, जीर्णत्वादुच्यतेऽधुना । अस्यैव पुरतः प्रायो, मुण्डनादि विधीयते ॥ ३८ ॥ धान्धलस्यैष सन्ताने, सीहडो गौष्ठिकः पुनः ।

चतुर्द्दशोऽभवदेव—मैतिह्यं स्थविरा जगुः ॥ ३९ ॥ जीरापल्लीप्रबन्धोऽयं, मया चक्रे यथाश्रुतम् । हृदि माध्यस्थ्यमास्थाया—ऽवधार्यश्च बहुश्रुतैः ॥ ४० ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे षष्ठ उपदेशः ॥ ६ ॥

---

निर्म्मापितं जैनगृहं क्रमेण, तीर्थं भवेदत्र यथा प्रसिद्धम् ।
अद्यापि सुश्रावकपारसेन, प्रवर्त्तितं श्रीफलवर्द्धितीर्थम् ॥ १ ॥

विक्रमार्कात् वेदसप्त—रुद्र ११७४ प्रमितवत्सरे । भूरिसूरिगुणैराढ्या, अभूवन् देवसूरयः॥ १ ॥ चतुर्युताऽशीतिमितान्, यो जिगाय प्रवादिनः । वादी कुमुदचन्द्रोऽपि, जितो यैः सोऽपि लीलया ॥ २ ॥

ते चामी—

वंभ अट्ठ ८ नव बुद्ध १७ भगव अट्ठारस ३५ जित्तय । सैव सोल ५१ दह भट्ट ६१ सत्त गंधव ६८ विजित्तय । जित्तदिगंबरसत्त ७५ च्यारि खत्तिअ ७९ दुइ जोइअ ८१ । इक धीवर ८२ इक भिल्ल ८३ भूमिपाडिअ इकभोइअ ८४ । ता कुमुदचंद इय जित्त सवि, अणहिलपुरि जव आविओ । वडगच्छतिलयपहुदेवसूरि, कुमुदह मद उत्तारिओ ॥ १ ॥

तदाडम्बरस्त्वयम्—

च्यारिजोड नीसाणहय हिंसइ पंचपंच्यासी, इग्यारह सइं सुहड सींससइं दुन्नि छियासी, वलदहँ सइं चत्तारि कम्मकर पंच बहुत्तर, अच्छ लक्खपणवीस दम्म दुइ लक्खबहुत्तर, ता चमरछत्त तुइर विरुद सुखासणवाहणलिओ वडगच्छतिलयपहुदेवसूरि नग्गओ वलि नग्गओ कीओ ॥ १ ॥

अन्यदा सूरिपादास्ते, नगरे मेडताऽभिधे । चतुर्मासीं स्थिताः पुण्य—पेशलांस्तन्वते जनान् ॥ ३ ॥ व्याख्यान-श्रवणं जिनौकसि गतिर्नित्यं गुरोर्वन्दनं, प्रत्याख्यानविधानमागमगिरां चित्ते चिरं स्थापनम्। कल्पाकर्णनमात्मशक्ति-तपसा संवत्सराराधनं, श्राद्धा जन्मफलं सदेति जगृहुः श्रीसूरिपादान्तिके ॥ ४ ॥ अथ श्रीसूरिपादास्ते, चतुर्मास्या अनन्तरम् । फलवर्द्धिपुरे प्रापु—र्मासकल्प चिकीर्षया ॥ ५ ॥ तत्रास्ति नैष्ठिकः प्रष्ठः, श्रावकः पारसाभिधः । येन जैनमतं ख्याति—मनीयत विशेषतः ॥ ६ ॥ त्रिसन्ध्यमर्चत्ययमर्हतां ततीः, शुचिर्द्विरावश्यकमातनोति यः । शृणोति तत्त्वानि गुरोर्मुखाम्बुजा—त्परं दरिद्रो धिगहो ! विधेर्विधिः ॥ ७ ॥ बहिर्भूमिगतोऽन्येद्युः, पारसः श्रावकोत्तमः । ददर्शाऽम्लानपुष्पौघ—मण्डितं लेष्टुसञ्चयम् ॥८॥ तथाविधं च तं दृष्ट्वा—ऽऽश्चर्यं चित्ते चमत्कृतः । आगत्य गुरुपादान्ते, तं वृत्तान्तमुवाच सः ॥ ९ ॥ विज्ञाय गुरवोऽ—प्येतत्स्वरूपं तन्मुखादथ। तेनैव श्रेष्ठिना सार्द्धं, तं प्रदेशमुपागताः॥१०॥ आर्हति प्रतिमा काचि—न्नूनमात्राऽतिशायिनी । भाविनीति विमृश्यान्तः, खानयामासुरांशु ते ॥ ११ ॥ प्रादुरास

क्षणात्तत्र, श्रीमत्पार्श्वजिनेशितुः । प्रतिमा प्राक्तनैः पुण्यैः, पीवरेन्दीवरप्रभा ॥ १२ ॥ हृष्टः श्रेष्ठी पुरान्तस्तां, गृहीत्वा समहोत्सवम् । पूजयामास संस्थाप्य, क्वापि तार्णे कुटीरके ॥ १३ ॥ बिम्बाधिष्ठायकोऽन्येद्यु–र्व्यन्तरः श्रेष्ठिपुङ्गवम् । स्वप्ने जगाद प्रासादं, स्वामिनस्त्वं विधापय ॥ १४ ॥ कारयामि कथं वित्ता–भावादित्याह तत्पुरः । जगाद व्यन्तरोऽप्येनं, शृणु वाक्यमिदं मम ॥ १५ ॥ प्रतिमायाः पुरो लोकै–र्ढौकिता अक्षता अपि । सर्वे स्वर्णीभविष्यन्ति, मत्प्रभावात्प्रति प्रगे ॥ १६ ॥ एवं प्रासादयोग्यं ते, भावि वित्तमसंशयम् । सम्बन्धोऽयं न कस्यापि, निवेद्यो भवता परम् ॥ १७ ॥ चेद्वदिष्यसि तत्रैव, स्वर्णप्राप्तिस्ततः परम् । इत्युक्त्वाऽन्तर्दधे देवः, पारसोऽपि तथाऽकरोत् ॥ १८ ॥ चैत्यमारम्भयाञ्चक्रे, शिल्पिभिः शुभवासरे । धीमद्भिर्धर्मकार्ये हि, विलम्बो न विधीयते ॥ १९ ॥ क्रमाद्धर्मगृहोत्तुङ्ग–मण्डपत्रितयान्वितम् । नानाचतुष्किकाकीर्णं, भूरिस्तम्भविभासुरम् ॥ २० ॥ विशालं वलभीमत्त–वारणैरुपशोभितम् । मेघमण्डपविभ्राजि, तोरणश्रेणिसुन्दरम् ॥ २१ ॥ वामदक्षिणयोः शाला–युगलेन च मालितम् । कतिभिर्वासरैश्चैत्यं, स्वर्विमानमिवाऽजनि ॥ २२ ॥ त्रिभिर्विशेषकम् ॥ एवमेकत्र पार्श्वेऽभूत्, चैत्यं यादृक् तथाविधम् । तच्चिकारयिषुः शेष–दिक्त्रयेऽपि स खल्वभूत् ॥ २३ ॥ परमत्रान्तरे पुत्रे–णैकेनैष कदाग्रहात् । पृष्टं तात ! कुतस्त्यास्ति, वित्तप्राप्तिस्तवेयती ॥ २४ ॥ श्रेष्ठिनाप्यतिनिर्बन्धा–दुक्तं तद्दैवतं वचः । ततः प्रभृति वित्तस्य, प्राप्त्युपायोऽस्य नाऽभवत् ॥ २५ ॥ चैत्यं तु तावदेवाऽभूत्, पारसश्रेष्ठिना ततः । प्रतिष्ठाविस्तरो भूयान्, प्रारेभे

विस्मयप्रदः ॥ २६ ॥ श्रीदेवसूरिप्रभुपट्टपङ्कज—प्रभाकराः श्रीमुनिचन्द्रसूरयः । चक्रुः प्रतिष्ठामिह बिम्बचैत्ययो-र्वेदांऽ[१२०४]-भ्रनेत्रक्षितिसम्मितेऽब्दके ॥ २७ ॥ तच्चैत्यमुत्तुङ्गमनुक्रमेण, बभूव तीर्थं फलवर्द्धिसंज्ञम् । अद्यापि यत्रात्मकलङ्कपङ्कं, प्रक्षालयन्त्यास्तिकसङ्घलोकाः ॥ २८ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे सप्तम उपदेशः ॥ ७ ॥

निर्म्मापितं पासिलसंज्ञकेन, श्रद्धावता श्राद्धवरेण चैत्यम् । आरासणे श्रीगुरुदेवसूरि—प्रतिष्ठितं तीर्थमभूत्क्रमेण ॥१॥

मुनिचन्द्रगुरोः शिष्याः, सूरीन्द्राः देवसूरयः । तस्थिवांसो भृगुपुरे, चतुर्मासकमेकदा ॥ १ ॥ चतुर्युताऽशीति-मिताः, क्रूरसर्प्पकरण्डिकाः । दधानः कान्हडो नाम, योगी तत्राऽन्यदा ययौ ॥ २ ॥ अवदच्चैष सूरिन्द्राः !, मया सह विधीयताम् । विवादस्त्यज्यतां नो वा, सिंहासनमिदं महत् ॥ ३ ॥ अथ प्रोचुरनूचानाः, अरे मूर्ख ! त्वया समम् । को वादः किं भवेद्युद्धं, मृगेन्द्रस्य शुना समम् ॥ ४ ॥ योगी प्राह—

सर्प्पक्रीडामहं वेद्मि, यामि राजकुलादिषु । सर्वेभ्योऽभ्यधिकं वस्त्रा—भरणादि लभे यतः ॥५॥ सूरयोऽप्यूचिरे योगिन् !, वादेच्छा कापि नास्ति नः । मुनयो ज्ञाततत्त्वाः स्यु—रार्हतास्तु विशेषतः ॥ ६ ॥ तथापि कौतुकं चेत्ते,

१ यद्यप्यस्मत्पार्श्ववर्तिसमग्रपुस्तकेष्वेतादृश एव पाठ उपलभ्यते, पर ग्रन्थान्तरेऽनन्तरोपदेशे च देवसूरयो मुनिचन्द्रसूरीणा शिष्यत्वेन प्रोक्ताः सन्ति, फलवर्धिपार्श्वजिनप्रतिष्ठाऽप्येभिरेव कृतास्ति । अतः सभाव्यते यल्लेखकदोषेण ग्रंथकृत्प्रमादेन वा विपर्यासो जात इति ॥

राजाऽध्यक्षं तदावयोः । वादोऽस्तु चतुरङ्गो हि, स कार्यो विजिगीषुभिः ॥ ७ ॥ ततस्तेन समं सर्व–श्रीसङ्घेन च संयुताः । प्राप्ता राजसभां तत्र, राज्ञापि बहुमानिताः ॥ ८ ॥ तत्र सिंहासने प्रौढे, ते स्थिता राजमण्डिते । दीप्यन्ते स्वोदयाद्रिस्थ–सहस्रकरबिम्बवत् ॥ ९ ॥ योगी बभाण राजेन्द्र !, परे वादाः सुखावहाः । एष प्राणान्तिको वादो, मम शक्तिर्विलोक्यताम् ॥ १० ॥ सूरयोऽपि स्वमुत्कर्षं, पोषयन्तस्तमब्रुवन् । रे वराक ! न जानासि, वयं सर्वज्ञसूनवः ॥ ११ ॥ आत्मनः परितः सप्त, रेखाः श्रीगुरुभिस्ततः । निर्म्मिताः पन्नगान्सोऽपि, मुमोच प्रचुरानपि ॥ १२ ॥ परं केनापि नाक्रान्ता, षष्ठीरेखेव कर्म्मणाम् । योगी दीनमुखो जातः, उपायान्तरमातनोत् ॥१३॥ धृत्वाऽग्रे कदलीपत्रं, कटिस्थनलिकास्थितम् । मुमोच पन्नगं सद्यः, सञ्जातं तच्च भस्मसात् ॥ १४ ॥ भो लोकाः ! एष रक्ताक्षः, सद्योन्तकृदिति ब्रुवन् । तं मुमोच स दुष्टात्मा, पश्यत्यपि महाजने ॥ १५ ॥ तन्मुक्तोऽन्यः पुनः सर्प–स्तद्वाहनमजायत । तत्रेरितोऽसावारोढु–मासने समढौकत ॥ १६ ॥ सूरयो ध्यानमालम्ब्य, तस्थुः सुस्थिरचेतसः । लोको हाहारवं चक्रे, योगी स्मेरमुखोऽभवत् ॥ १७ ॥ स दृग्विषोऽपि भोगी श्री–गुरुमाहात्म्यतः परम् । निष्प्रभावोऽभवच्छक्तिः, कटरे कापि तापसी ॥ १८ ॥ इतश्चैका शकुनिका, समागत्याऽतिवेगतः । उत्पाट्य तत्सर्प्पयुगं, मुमुचे नर्मदातटे ॥ १९ ॥ निपत्य पादयोर्योगी, त्यक्त्वाऽहङ्कारमात्मनः । यथागतमगाद्दीनः, सङ्घोऽपि मुमुदेतमाम् ॥२०॥ भूपोऽथ सपरीवारः, प्रौढोत्सवपुरस्सरम् । स्वस्थाने प्रापयामास, तान् पूज्यान् श्रीगुरूत्तमान् ॥ २१ ॥ तस्यामेव

निशीथिन्या–मागत्यैका सुरी जगौ । श्रीगुरून् भगवन् ! योऽयं, सम्मुखो दृश्यते वटः ॥ २२ ॥ अत्रावस्थितया पक्षि–ण्यैकया धर्मदेशना । अश्रावि भवता तत्र, ज्येष्ठस्थितिविधायिना ॥ २३ ॥ साहं ततो मृता जाता कुरुकुल्लासुरी विभोः ! । कृत्वा शकुनिकारूपं, मया सर्प्पौ निराकृतौ ॥ २४ ॥ ततः श्रीगुरुभिश्चक्रे, कुरुकुल्लास्तवो नवः । यमद्यापि पठन् भव्यो, निषेधयति पन्नगान् ॥ २५ ॥ ततः श्रीगुरुभिश्चक्रे, विहारः पत्तनोपरि । कियत्कालं स्थितास्तत्र, श्रीसङ्घस्य दृढाग्रहात् ॥ २६ ॥ इतश्चारासणग्रामे, पासिलः श्रावकोत्तमः । मन्त्रिगोगासुतो वित्त–हीनो वसति शुद्धधीः ॥ २७ ॥ सोऽन्यदा घृततैलादि–विक्रेतुं पत्तने ययौ । कृत्वा तत्र स्वकार्याणि, श्रीगुरूंस्तानवन्दत ॥ २८ ॥ तत्र राजविहारस्य, स प्रमाणं निभालयन् । नवत्यैकादशस्वर्ण–लक्षेट्छाडातनूजया ॥ २९ ॥ हांसी नाम्न्या सोपहासं, भाषितः किमियत्रमम् । चैत्यं कारयितुं भ्रात–स्तवापि स्पृहयालुता ॥३०॥ सोऽप्याह भगिनि ! प्रायो, दुर्घटं मादृशामिदम् । बालस्य नहि शक्तिः स्यात्, सुवर्णाचलतोलने ॥ ३१ ॥ तथापि यदि कार्येत, प्रासादो जातुचिन्मया । आगन्तव्यं त्वया तत्रे–त्युक्त्वा स्वस्थानमागमत् ॥ ३२ ॥ आरराध ततोऽम्बां स, गुरूक्ताम्नायपूर्वकम् । दशोपवासैः प्रत्यक्षा, साप्यऽभूदस्य भाग्यतः ॥ ३३ ॥ ममानुभावात्ते भावी, रूप्यकृत्सीसकाकरः । तं वाहय स्वयं जैन–प्रासादं च विधापय ॥ ३४ ॥ इत्यादेशं समासाद्य, चैत्यं श्रीनेमिनः प्रभोः । स कारयितुमारेभे, ग्रामे तत्राऽन्यदा पुनः ॥ ३५ ॥ आगता गुरवः केऽपि, पृष्टः श्रेष्ठी स तैरपि । भद्र ! निर्वहते कर्म–स्थायश्चैत्ये समाधिना

॥ ३६ ॥ देवगुर्वोः प्रसादेन, सोऽवादीदम्बिका ततः । चुकोप यत्कृतश्चोऽसौ, मत्कृतं नैव मन्यते ॥ ३७ ॥ द्वादशप्रहरव्यूढ–सीसकाकररूप्यतः । शिखरावधि तच्चैत्यं, जातं तस्याऽग्रतो न तु ॥ ३८ ॥ आकार्य पत्तनात्तान् श्री–गुरूंस्तां भगिनीं च सः । श्रीनेमेः कारयामास, प्रतिष्ठाविस्तरान् बहून् ॥ ३९ ॥ उवाच भगिनी सापि, बन्धो ! वस्त्राणि देहि मे । चैत्येऽत्र मण्डपमहं, कारये चेद्भवान्वदेत् ॥ ४० ॥ श्रेष्ठी बभाण सुष्ठूक्तं, त्वयेत्यथ विधायितः । मण्डपो मेघनादाख्यो, नवलक्षव्ययात्तया ॥ ४१ ॥ अन्येऽपि तत्र प्रासादाः, कारिता व्यवहारिभिः । एवं च तत्तीर्थमभूत्, प्रसिद्धं पृथिवीतले ॥ ४२ ॥

ग्रन्थान्तरेप्युक्तम्—

गोगाकस्य सुतेन मन्दिरमिदं श्रीनेमिनाथप्रभो-स्तुङ्गं पासिलसंज्ञितेन सुधिया श्रद्धावता मन्त्रिणा ।
शिष्यैः श्रीमुनिचन्द्रसूरिसुगुरोर्निर्ग्रन्थचूडामणे–र्वादीन्द्रैः प्रभुदेवसूरिगुरुभिर्नेमेः प्रतिष्ठा कृता ॥ १ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे अष्टम उपदेशः ॥ ८ ॥

---

श्रोद्दाममाहात्म्यरमाभिरामं, श्रीपार्श्वविश्वाधिपतिं प्रणम्य ।
यथाश्रुतं श्रीकलिकुण्डतीर्थोत्पत्तिं भणिष्यामि गुरूपदेशात् ॥ १ ॥

चम्पानगर्या आसन्ने, श्वापदश्रेणिभीषणा । कादम्बरीति विख्याता, विद्यते विकटाटवी ॥ १ ॥ कलिनामा महोतुङ्ग—स्तस्यामस्ति शिलोच्चयः । तस्याऽधस्तनभूभागे, कुण्डाख्यं च सरोवरम् ॥ २ ॥ तत्स्थानं तद्द्वयीयोगात्, कलिकुण्डमिति श्रुतम् । तीर्थं तु जातं श्रीपार्श्व—चरणाम्भोजपावनात् ॥ ३ ॥ तथाहि वामनः कोऽपि, पुरा क्वापि पुरेऽभवत् । हस्यते प्रत्यहं चैष, स्थाने स्थाने नृपादिभिः ॥ ४ ॥ तदुद्विग्नो मुमूर्षुः स—न्नाऽऽत्मानं क्वापि पादपे । उल्लम्बयितुमारेभे, स तु मूर्खशिरोमणिः ॥ ५ ॥ सुप्रतिष्ठेन मित्रेण, श्राद्धेनैष निषेधितः । उक्तं च भो महाभाग !, किमेवं म्रियसे मुधा ॥ ६ ॥ सौभाग्यारोग्यरूपादि, यदीच्छसि मनोरमम् । तपःप्रभृतिकं जैनं, धर्म्ममेव तदाचर ॥ ७ ॥ इत्युक्त्वा स गुरोः पार्श्वे, नीतोऽश्रावि च देशनाम् । सम्यक्त्वं ग्राहितः शुद्धं, कृतश्च श्रावकोत्तमः ॥ ८ ॥ ततश्च स चिरं तेपे, तपांसि विविधान्यपि । भूयासमुच्चदेहोऽहं, निदानमिति चातनोत् ॥ ९ ॥ स वामनः क्रमान्मृत्वा, यूथनाथो महाबलः । तस्यामटव्यां सञ्जातो, महीधर इति द्विपः ॥ १० ॥ अन्यदा श्रीपार्श्वनाथः, छद्मस्थो विहरन् भुवि । आयातः पल्वले तत्र, कायोत्सर्गे च तस्थिवान् ॥ ११ ॥ स गजो जलपानार्थं, तदा तत्र समागतः । जगन्नाथमथालोक्य, जातिस्मरणवानभूत् ॥ १२ ॥ अहो ! धर्मं विराध्याऽहं, पशुरज्ञानतोऽभवम् । तदैव देवमर्चित्वा, कुर्वे स्वं सफलं जनुः ॥ १३ ॥ विमृश्येत्यम्बुजव्रातै—रभ्यर्च्य परमेश्वरम् । कृत्वानशनमुत्पन्नो, महर्द्धिर्व्यन्तरेष्वसौ॥१४॥ श्रुतश्च चम्पानाथेन, करकण्डुमहीभुजा । सर्वो व्यतिकरः सोऽयं, विस्मितश्च स्वचेतसि ॥ १५ ॥ यावत्स भूपतिस्त-

त्रा–गच्छत्युत्साहपूरितः । विजहार प्रभुस्तावत्, स विषादं दधौ भृशम् ॥ १६ ॥ किं स्यान्निर्भाग्यसत्त्वानां, श्रीजिनेन्द्रस्य दर्शनम् । आत्मानं निन्दयामास, श्लाघयामास च द्विपम् ॥ १७ ॥ स्थाने च तत्र प्रासादं, महान्तं निरपीपदत् । नवहस्तमिताऽस्थापि, तत्र च प्रतिमा प्रभोः ॥१८॥ केचित्पुनरिदं प्राहु–र्धरणेन्द्राऽनुभावतः । नवहस्तप्रमाणार्चा, तदैवाविरभूत्प्रभोः ॥ १९ ॥ वन्दित्वा पूजयित्वा स, प्रतिमां तां प्रमोदवान् । स्वनिर्मापितचैत्ये च, न्यवीविशदयं द्विपः ॥ २० ॥ तत्र स व्यन्तरो लोक–प्रत्ययान् पूरयत्यलम् । ततः प्रभृति सञ्जातं, तत्तीर्थं भुवि विश्रुतम् ॥ २१ ॥ प्रभावनाप्रेक्षणकादिकोत्सवा-नव्याजभक्तिः कर्कण्डुभूपतिः । निर्मापयंस्तत्र पवित्रचेतसा, प्रभावकश्रावकपुङ्गवोऽभवत् ॥ २२ ॥ स व्यन्तरोऽपि तामर्चां, पूजयन् प्रणमन्स्तुवन् । क्रमात्सुगतिभाग्भावी, तदेवं यजतार्हतः ॥२३॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे नवम उपदेशः ॥ ९ ॥

---

श्रीअन्तरिक्षप्रभुपार्श्वनाथः, श्रेयांसि स प्राणभृतां तनोतु ।
यदङ्गसम्पर्कि पयो निपीय, श्रीपालराजाऽजनि नष्टकुष्ठः ॥ १ ॥

किलैकदा रावणेन, स्वकार्ये विनियोजितौ । गच्छतः स्म विमानस्थौ, क्वचिन्मालिसुमालिनौ ॥ १ ॥ तदार्हत्प्रतिमा ताभ्यां, व्यस्मारि स्वगृहे पुनः । जिनार्चनं विना भुक्ते–र्नियमस्तु दृढस्तयोः ॥ २ ॥ प्राप्ते भोजनकाले तु, पवि-

त्रैर्वालुकाकणैः । निर्माय प्रतिमां पार्श्व–प्रभोः पूजयतः स्म तौ ॥ ३ ॥ ततः सा प्रतिमा ताभ्यां, गच्छंद्भ्यामग्रतः पुनः । सरोऽन्तः स्थापिता दिव्या–नुभावाच्च स्थिराऽभवत् ॥ ४ ॥ ततःप्रभृति तस्मिंश्च, पल्वले विमलं जलम् । न जातु त्रुटितं तस्याः, प्रतिमायाः प्रभावतः ॥ ५ ॥ तदा च बिङ्गिल्लपुरे, श्रीपालो नाम भूपतिः । सर्वाङ्गमभवद्दुष्ट–कुष्ठरोगेण पीडितः ॥६॥ अप्योषधशतैर्वैद्याः, अकार्षुस्तत्प्रतिक्रियाः। तथापि न गुणो जात–स्तृषेव क्षारनीरतः ॥७॥ क्रीडाकृते गतो भूपोऽ–न्यदा तस्मिन् सरोवरे । विश्रान्तस्तृषितः पीत्वा, जलं स्वस्थोऽभवत् क्षणम् ॥८॥ मुखं हस्तौ च पादौ च, प्रक्षाल्य स्वगृहं ययौ । ते चाङ्गावयवाः सद्यो, जाताः काञ्चनरोचिषः ॥ ९ ॥ प्रातस्तत्कौतुकं दृष्ट्वा, किमे-तदिति भूपतिम् । पप्रच्छ राज्ञी वृत्तान्तं, सोऽप्याह क्षालनादिकाम् ॥ १० ॥ कोऽप्यत्रातिशयोऽस्तीति, विस्मितो हृदि भूपतिः । तत्र स्नानं विधत्ते स्म, ततो जातो निरामयः ॥ ११ ॥ नैवेद्यबलिधूपादि, कृत्वा भूपो जुघोष च । अत्रास्ति दैवतं यत्तत्, प्रकटीभवतादिति ॥ १२ ॥ उक्त्वेति तस्यां यामिन्यां, तत्रैव स्वपिति स्म सः । ब्राह्मये मुहूर्त्ते-ऽधिष्ठाता, देवस्तमिति चाऽलपत् ॥ १३ ॥ अत्र श्रीपार्श्वनाथस्य, भाविनः प्रतिमाऽस्ति भोः । यत्प्रभावात्तवाङ्गोत्थः, कुष्ठरोगः क्षयं ययौ ॥ १४ ॥ आरोप्य शकटे चैनां, ससाहर्जाततर्णकौ । नियोज्य सारथीभूय, स्वयं चालयतां द्रुतम् ॥ १५ ॥ द्रक्ष्यस्यवाङ्मुखं यत्र, तत्र स्थास्यत्यसौ पुनः । इति प्रोच्य गतो देवो, भूपोऽपि प्रत्यबुध्यत ॥१६॥ सुरोक्तमखिलोपायं, प्रातर्भूपोऽपि निर्ममे । यावत्किञ्चिद्व्यतिक्रान्त–भूभागं संदिदेह सः ॥ १७ ॥ आयाति प्रतिमा

किं वा, नवेत्युद्वेगमावहन् । वक्रीकृत्य क्षणाद्ग्रीवां, भूपः पश्चाद्व्यलोकत ॥ १८ ॥ तावत्सा प्रतिमा व्योम्नि, स्थिता दिव्यानुभावतः । शकटं त्वग्रतो यातं, भूपोऽत्यर्थं विसिष्मिये ॥ १९ ॥ निवेश्य नगरं नव्यं, श्रीपुरं तत्र भूपतिः । अचीकरच्च प्रोत्तुङ्गं, प्रासादं प्रतिमोपरि ॥ २० ॥ घटौ गर्गेरिकायुक्तौ, न्यस्य नारी स्वमस्तके । तद्बिम्बाधः प्रयाति स्म, पुरेति स्थविरा जगुः ॥ २१ ॥ एवं स भूपतिर्भूरि–कालं तं जिनमार्चयत् । सर्वं समीहितं प्राप, क्रमाच्छिवगतिं गमी ॥ २२ ॥ कियदन्तरमद्यापि, भूमिप्रतिमयोः खलु । अस्तीति तत्र वास्तव्या, वदन्ति जनता अपि ॥ २३ ॥

इत्यन्तरिक्षप्रभुपार्श्वनाथं, भूपो यथाऽभ्यर्च्य बभूव नीरुक् ।
तथा भवन्तोऽपि जिनेन्द्रचन्द्र–माराध्य भव्याः ! सुखिनो भवन्तु ॥ २४ ॥

॥ इति उपदेशसप्ततिकायां द्वितीयेऽधिकारे दशम उपदेशः ॥ १० ॥

---

दुर्वारमारिप्रमुखोपसर्ग्गाः, देवाधिदेवार्चनतः क्षयन्ति ।
श्रीशङ्कराख्यक्षितिपस्य यद्व–न्माणिक्यदेवं यजतो जिनेन्द्रम् ॥ १ ॥

भरतेन पुरा चैत्ये, कारितेऽष्टापदे गिरौ । वर्णाद्यैरन्विताः सर्व–जिनार्चा विनिवेशिताः ॥१॥ नीलरत्नमयी चैका, प्रतिमा प्रथमप्रभोः । अंशप्रांशुजटा तेन, तत्रास्ति स्थापिता पृथक् ॥ २ ॥ अत एव जनैस्तस्याः, अर्चाया अभिधी-

यते । माणिक्यदेव इत्याख्या, सप्रभावा च सा भृशम् ॥ ३ ॥ केचिदित्थं पुनः प्राहु–रियं भरतचक्रिणः । मुद्रिका-मध्यवर्त्तिष्णु–पाचिरत्नविनिर्मिता ॥ ४ ॥ एवं सा प्रतिमा तत्र, भूरिकालमपूज्यत । अन्येद्युस्तत्र यात्रार्थं, खेचराः केचिदागताः ॥ ५ ॥ तां चाऽपूर्वतमां प्रेक्ष्य, प्रतिमां प्रीतचेतसः । निन्यिरे दक्षिणश्रेणौ, प्रत्यहं पूज्यते च तैः ॥ ६ ॥ अन्यदा नारदस्तेषा–मतिथिः प्रासवानभूत् । निरीक्ष्य सोऽपि पप्रच्छ, प्रतिमेयं कुतो नु वः ॥ ७ ॥ तेऽप्यूचुरियमानीता–ऽस्माभिर्वैताढ्यपर्वतात् । राज्यराष्ट्रादिभिर्वृद्धिरभूच्चाऽस्याः समागमात् ॥ ८ ॥ श्रुत्वेति नारदः प्राह, तन्माहात्म्यं तु वज्रिणः । मेरौ शाश्वतचैत्यानि, वन्दितुं समुपेयुषः ॥ ९ ॥ ततः शक्रोऽपि तां देवै–रानयामासिवान् दिवि । नहि कल्पलताप्राप्तौ, भवेन्मन्दादरः सुधीः ॥ १० ॥ इत्थं सा स्वर्गलोकेऽपि, देवैः सन्तुष्टमानसैः । सुबह्वन् सागरान् याव–दर्चिता भक्तिभासुरैः ॥ ११ ॥ अत्रान्तरेऽत्र भरते, रावणो राक्षसेश्वरः । त्रैलोक्यकण्टको जात–स्तस्य मन्दोदरी प्रिया ॥ १२ ॥ तयापि नारदमुखा–त्तन्माहात्म्ये श्रुते सति । प्रेरितो रावणः शक्र–माराध धियां निधिः ॥ १३ ॥ तुष्टः शक्रोऽपि तामर्चां, मन्दोदर्याः समर्प्पयत् । त्रिसन्ध्यमतिहर्षेण, सापि पूजयति स्म ताम् ॥ १४ ॥ अथाऽन्यदा दशग्रीवो, रामभार्यामपाहरत् । कलत्रभ्रातृपुत्राद्यैः, प्रोक्तोऽप्येतां मुमोच न ॥ १५ ॥ बिम्बाधिष्ठायको वादी–ल्लङ्कालङ्काधिपक्षयम् । मन्दोदर्या ततः सार्चा, न्यासीचक्रे पयोनिधौ ॥ १६ ॥ इतश्च—

कर्णाटदेशे कल्याण–नगरे शङ्करो नृपः । अभूज्जिनपदाम्भोज–भृङ्गोऽभङ्गुरभाग्यवान् ॥ १७ ॥ मिथ्यादृग्

व्यन्तरोऽन्येद्यु–स्तत्र मारिं वितेनिवान् । तेन चिन्तातुराः सर्वे, नृपामात्यादयोऽभवन् ॥ १८ ॥ नृपतिं दुःखितं ज्ञात्वा, स्वप्ने पद्मावती जगौ । माणिक्यदेवप्रतिमा, यास्त्यन्तःसागरस्थिता ॥ १९ ॥ पुरेऽत्र यदि साऽभ्येति, तदा मारिर्व्य-लीयते । लब्धोपायस्ततो भूप–स्तथैव निखिलं व्यधात् ॥ २० ॥ तुष्टो लवणनाथोऽपि, भक्तियुक्त्या तदीयया । विम्वं मन्दोदरीसत्कं, भूपालाय समर्प्पयत् ॥ २१ ॥ उक्तं चैतत्प्रभावात्ते, सुभिक्षारोग्यसम्पदः । पृष्टौ कृत्वा स्वयं विम्वं, मार्ग्गे गच्छ यथासुखम् ॥ २२ ॥ सन्देहं यत्र कर्त्तासि, तत्र स्थास्यति किन्त्विदम् । शिक्षां दत्वेति देवोऽपि, तिरोऽधत्त क्षणादपि ॥ २३ ॥ आरोप्य पृष्टौ तामर्चां, ससैन्यः क्षितिपोऽचलत् । यावत्तिलिङ्गदेशस्थ–कुल्पपाकपु-रेऽगमत् ॥ २४ ॥ तावच्चकार सन्देहं, तद्धाराऽवेदनात् कचित् । किमागच्छति नो वेति, ततस्तत्रैव तत् स्थितम् ॥ २५ ॥ श्रीकुल्पपाकनगरे, रम्यं चैत्यं विधाप्य नरपतिना । निर्म्मलमरकतमणिमय–रुचिरं तद्बिम्वमस्थापि ॥२६॥ पञ्चशताशीतिवर्षाणि, तद्बिम्वं गगने स्थितम् । तत्पूजनाच्च रोगाणां, शान्तिरासीत् समं ततः ॥ २७ ॥ पूजार्थं द्वाद-शग्रामा–नर्चकेभ्यः स दत्तवान् । भूपालो भूरिकालं च, तं जिनेन्द्रमपूजयत् ॥ २८ ॥ स्वर्ग्गादत्र समागतस्य शरदां लक्षा गिरीशप्रमा, एकाशीतिशरत्सहस्रसहिता यस्य प्रभोः जज्ञिरे । त्रैलोक्याऽतिशयालुनाममहिमा माणिक्यदेवा-भिधः, स श्रीआदिजिनश्चिराय भवतां सम्पद्यतां श्रेयसे ॥ २९ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे एकादश उपदेशः ॥ ११ ॥

जयत्यऽसौ स्तम्भनपार्श्वनाथः, प्रभावपूरैः परितः सनाथः ।
स्फुटीचकाराऽभयदेवसूरि—र्यो भूमिमध्यस्थितमूर्त्तिमिद्धम् ॥ १ ॥

पुरा श्रीपत्तने राज्यं, कुर्वाणे भीमभूपतौ । अभूवन् भूतले ख्याताः, श्रीजिनेश्वरसूरयः ॥ १ ॥ सूरयोऽभयदेवाख्या—स्तेषां पट्टे दिदीपिरे । येभ्यः प्रतिष्ठामापन्नो, गच्छः खरतराऽभिधः ॥ २ ॥ तेषामाचार्यवर्याणां, मान्यानां भूभृतामपि । कुष्ठव्याधिरभूद्देहे, प्राच्यकर्म्माऽनुभावतः ॥ ३ ॥ ततः श्रीगुर्जरत्रायां, शम्भाणकपुरं प्रति । शक्त्यल्पत्वेऽपि ते चक्रु—र्विहारं गुरुपुङ्गवाः ॥ ४ ॥ रोगग्रस्ततयाऽत्यन्तं, सम्भाव्य स्वायुषः क्षयम् । मिथ्यादुष्कृतदानार्थं, सर्वं श्रीसङ्घमाह्वयन् ॥ ५ ॥ तस्यामेव निशीथिन्यां, स्वप्ने शासनदेवता । प्रभो ! स्वपिषि जागर्षि, किं वेत्याह गुरुं प्रति ॥ ६ ॥ रोगिणः क्वास्ति मे निद्रे—त्युक्ते देवी गुरुं जगौ । उन्मोटयत तद्धेताः, सूत्रस्य नवकुत्कुटीः ॥ ७ ॥ शक्तेरभावेऽप्युक्ते च, साह मैवं वचो वद । त्वमद्यापि नवाङ्गया य—द्वृत्तीः स्फीताः करिष्यसि ॥ ८ ॥ श्रीसुधर्म्मकृतग्रन्थान् , कथमर्थापयाम्यहम् । पङ्गोः प्रत्येति को नाम, मेर्वारोहणकौशलम् ॥ ९ ॥ देव्याह यत्र सन्देहः, स्मर्त्तव्याऽहं त्वया तदा । यथा भिनद्मि तान्सर्वान् , पृष्ट्वा सीमन्धरं जिनम् ॥ १० ॥ रोगग्रस्तः कथं मातः !, करोमि विवृतीरहम् । मा वादीस्तत्प्रतीकारे, किन्तूपायमिमं शृणु ॥ ११ ॥ अस्ति स्तम्भनकग्रामे, सेढीनाममहानदी । तस्यां श्रीपार्श्वनाथस्य, प्रतिमास्त्यतिशायिनी ॥ १२ ॥ यत्र च क्षरति क्षीरं, प्रत्यहं कपिलेति गौः । तत्खुरोत्खातभूमौ

च, द्रक्ष्यसि प्रतिमासुखम् ॥ १३ ॥ तदेवं सप्रभावं त-द्बिम्बं वन्दस्व भावतः । यथा त्वं स्वस्थदेहः स्याः, इति प्रोच्य गता सूरी ॥ १४ ॥ प्रातर्जागरितास्तेऽथ, स्वप्नार्थमवबुध्य च । समं समग्रसङ्घेन, चेलुः स्तम्भनकं प्रति ॥ १५ ॥ तत्र गत्वा यथास्थाने, प्रेक्ष्य पार्श्वजिनेश्वरम् । उल्लसत्सर्वरोमाञ्चाः, एवं ते तुष्टुवुर्मुदा ॥ १६ ॥

जय तिहुयणवरकप्परुक्ख जय जिनधन्नंतरि, जय तिहुयणकल्लाणकोस दुरिअकरिकेसरि ।
तिहुयणजणअविलंघियाण भुवणत्तयसामिय, कुणसु सुहाइं जिणेसपास थंभणपुरट्ठिय ॥ १ ॥

वृत्ते तु षोडशे सार्चा, सर्वाङ्गं प्रकटाऽभवत् । अत एवाग्रवृत्ते तैः, पच्चक्खेति पदं कृतम् ॥ १७ ॥

फणिफणफारफुरंतरयणकररंजियनहयल, फलिणीकंदलदलतमालनीलुप्पलसामल ।
कमठासुरउवसग्गवग्गसंसग्गअगंजिय, जय पच्चक्खजिणेसपास थंभणयपुरट्ठिय ॥ १ ॥

एवं द्वात्रिंशता वृत्तै-स्तुष्टुवुः पार्श्वतीर्थपम् । श्रीसङ्घोऽपि महापूजा-द्युत्सवांस्तत्र निर्ममे ॥ १८ ॥ अन्त्यवृत्तद्वयं तत्र, त्यक्त्वा देव्युपरोधतः । चक्रिरे त्रिंशता वृत्तैः, सप्रभावं स्तवं हि ते ॥ १९ ॥ तत्कालं रोगनिर्मुक्ताः, सूरयस्तेऽपि जज्ञिरे । नव्यकारितचैत्ये च, प्रतिमा सा निवेशिता ॥ २० ॥ स्थानाङ्गादिनवाङ्गानां, चक्रुस्ते विवृतीः क्रमात् ॥ देवतावचनं न स्यात्, कल्पान्तेऽपि हि निष्फलम् ॥ २१ ॥ सौवर्णा नव्यनिष्पन्न-ग्रन्थपुस्तकसञ्चये । दृष्टा उत्तरिका भूपा-दिभिर्दिव्याऽनुभावतः ॥ २२ ॥ पत्तने भीमभूपालो, द्रव्यलक्षत्रयव्ययात् । लेखयामास ताः सर्वा, वृत्तीः स्वपर-

सूरिभिः ॥ २३ ॥ एवं ते सूरयो भूरि–कालं श्रीवीरशासने । चिरं प्रभावनां चक्रुः, प्राप्तसार्वत्रिकोदयाः ॥ २४ ॥ अज्ञायमानादिरमर्त्यनायक–श्रीरामकृष्णोरुगपाम्बुपादिभिः । नानाविधस्थानकृतार्चनश्चिरं, पार्श्वप्रभुः पातु भवात् स देहिनः ॥ २५ ॥ अथवा—पार्श्वे श्रीकुन्थुनाथस्य, मम्मणव्यवहारिणा। पृष्टं मोक्षः कदा भावी, मम स्वाम्यपि तं जगौ ॥ २६ ॥ तीर्थे श्रीपार्श्वनाथस्य, तव सिद्धिर्भविष्यति । अचीकरदिमामर्चां, ततोऽसाविति केचन ॥ २७ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे द्वादश उपदेशः ॥ १२ ॥

---

जीर्णोद्धारं नूतनं वा जिनानां, ये प्रासादं कारयन्त्याऽऽस्तिकौघाः ।
ते स्युः पूज्या रामनामा यथेह, श्रेष्ठी श्रेयःश्रीनिवासो बभूव ॥ १ ॥

श्रीनिवासपुरे श्रेष्ठी, श्रीगुप्तः श्रीनिकेतनम् । स्वामी द्रव्याष्टकोटीनां, प्रकृत्या कृपणः पुनः ॥ १ ॥ तत्पुत्रो विजयो नाम, स तु दानप्रियो भृशम् । पिता निषेधयत्येनं, दानं शूलं हि तादृशाम् ॥ २ ॥ अन्येद्युः शूलरोगेण, श्रीगुप्तो मृत्युमासवान् । अथाह जननी पुत्रं, शृणु वत्स ! वचो मम ॥ ३ ॥ त्वदीयजनकेनाऽष्टा–त्र द्रविणकोटयः । सन्ति न्यासीकृतास्तास्त्वं, गृहाण च कृतार्थय ॥ ४ ॥ सोऽपि यावदुपादत्ते, तन्निधानमनाकुलः । तावद्ददर्श फूत्कार–भीषणं तत्र पन्नगम् ॥ ५ ॥ व्यावृत्त्य सहसोद्यातो, विजयस्तस्य दर्शनात् । एवं द्वित्रिरसौ चक्रे, न तथाप्यासवान्नि-

धिम् ॥ ६ ॥ अन्यदा केवली कोऽपि, प्रासस्तत्र सुरद्रुवत् । समं राजादिलोकेन, विजयो वन्दितुं ययौ ॥ ७ ॥ तत्कृतां देशनां श्रुत्वा, विजयः पृष्टवानिति । निधिस्थाने कथं सर्प-दर्शनं मेऽभवत्प्रभो ! ॥ ८ ॥ ज्ञानी प्राह त्वदीयो यः, पिता स व्यन्तरोऽभवत् । सर्प्परूपेण तेन त्वं, निधिं गृह्णन्निवारितः ॥ ९ ॥ व्यन्तरोऽन्येद्युरागत्य, राज्ञोऽग्रे प्राह वारय । निधिजिघृक्षुं विजयं, करिष्येऽनर्थमन्यथा ॥ १० ॥ नृपः प्राह निधानेन, त्वं किं कर्त्तासि मे वद । पुत्रस्तु कुरुतां दान-पूजादि त्वदनुग्रहात् ॥ ११ ॥ एवं कृते तवापि स्यात्, फलं पुण्यानुमोदनात् । इत्याद्युवाच राजेन्द्रस्तथाप्येप न बुद्धवान्॥ १२ ॥ निधानव्यन्तरस्तम्भ-कारकः कोऽपि कोविदः । अन्यदा विजयस्यैकः, प्रासो लोचनगोचरम् ॥ १३ ॥ तस्य सान्निध्यतस्तेन, तमाक्रम्य हठादपि । तन्निधानमुपादायि, मूर्त्तं पुण्यमिवात्मनः ॥ १४ ॥ तद्द्रव्यव्ययतः श्रीम-द्गुरूणामुपदेशतः । श्रीशान्तेर्जीर्णचैत्यस्य, स उद्धारं व्यदीधपत् ॥ १५ ॥ उपदेशस्त्वयम्—

नूतनश्रीजिनागार-विधाने यत्फलं भवेत् । तस्मादष्टगुणं पुण्यं, जीर्णोद्धारे विवेकिनाम् ॥ १ ॥

श्रीहेमसूरिवाक्यं श्रीआम्रभटं प्रति ॥

अचिकरत् प्रतिष्ठादि-विस्तरांश्च मनोहरान् । श्रीसङ्घोऽपि ध्वजस्नात्र-प्रमुखं तत्र निर्ममे ॥ १६ ॥ अन्यदा तस्करं कञ्चि-द्वधार्थं राजपुरुषैः । नीयमानं पुरेऽपश्य-द्विजयश्चैत्यसंस्थितः ॥ १७ ॥ विजयो मोचयत्येनं, भूपं विज्ञाप्य सोऽपि तम् । उवाचाऽञ्जनसिद्धो-ऽयमन्तःपुरविनाशकृत् ॥ १८ ॥ स्वविद्यां वक्ति यद्येप, तदा मुञ्चामि नान्यथा ।

धन्यस्य कस्यापि भवन्ति भाग्यतः, श्रीतीर्थयोगाः सकलेष्टदायिनः ।
तत्रापि सिद्धाचलभूरियं यया, हत्यादिदोषा अपि दूरतः कृताः ॥ १ ॥

श्रावस्त्यामस्ति धात्रीश–स्त्रिशङ्कुकुलदीपकः । त्रिविक्रम इति त्रात–त्रैलोक्यः स्वपराक्रमैः ॥ १ ॥ सोऽन्यदा कानने क्वापि, क्रीडन्नीडनिवासिनम् । वटे कटुरटन्तं च, पक्षिणं कञ्चिदैक्षत ॥ २ ॥ दुष्टः शकुन इत्येष, बाणमाकृष्य तं जवात् । जघान सानुतापश्च, पश्चात्किञ्चिदजायत ॥ ३ ॥ कालान्तरे स भूजानि–र्वैराग्यभररङ्गितः । अङ्गीकृत्य परिव्रज्यां, क्रमाज्जातो महाऋषिः ॥ ४ ॥ उत्पन्नतेजोलेश्याकः, स दुस्तपतपोभरैः । प्रबोधयन् भव्यलोकान् , विजहार वसुन्धराम् ॥ ५ ॥ स खगोऽपि तदा मृत्वा, भिल्लः पल्ल्यामभूत् क्वचित् । कुर्वन्विविधपापानि, सञ्जातः स्वोदरंभरिः ॥ ६ ॥ अन्येद्युः स ऋषिः क्वापि, विहरंस्तस्य दृक्पथे । पपात तेन यष्ट्याद्यै–स्ताडितः कुपितात्मना ॥ ७ ॥ कोपाटोपाकुलत्वेन, विस्मृत्याचारमात्मनः । स्वतेजोलेश्यया भिल्लं, तं वराकमदीदहत् ॥ ८ ॥ भिल्लो विपद्य सञ्जातः, केसरी क्वापि कानने । स तथैव ऋषिः पुच्छा–च्छोटिनं तममारयत् ॥ ९ ॥ सञ्जातस्तदनुद्वीपी, मारितश्च तथैव सः । तस्य हि भ्रष्टवृत्तस्य, तेजोलेश्यास्त्रतां ययौ ॥ १० ॥ ततो राजगृहे जातः, सण्डः सम्मुखधावनात् । सोऽपि व्यापादितो तेन, पूर्ववन्मत्सरस्पृशा ॥ ११ ॥ ततः फणीफणाभार–भारितो भीषणाकृतिः । निरीक्ष्य तं मुनिं कायो–त्सर्गस्थं सोऽभ्यधावत ॥ १२ ॥ प्राग्वत्तं हतवान्साधुः, सञ्जातो ब्राह्मणस्ततः । निन्दां कुर्वन् हतः काऽहो !, निर्वि-

वेकस्य संवरः ॥ १३ ॥ हत्यासप्तकमित्येष, निर्ममोऽपि विनिर्ममे । योगिनोऽपीति पापानि, कर्मणां धिग् विजृम्भितम् ॥ १४ ॥ द्विजो वाणारसीपुर्यां, महाबाहुनृपोऽभवत् । यथाप्रवृत्तकरणा–च्छुभकर्म्मोदयोन्मुखः ॥ १५ ॥ देवो–रासभतां याति, रासभोऽपि नरेन्द्रताम् । ईश्वरो निःस्वतां चेति, कटरे ! भवनाटकम् ॥ ६ ॥ स भूपतिर्गवाक्षस्थो–ऽन्यदा कञ्चन संयतम् । प्रेक्ष्य जातिस्मृतेः प्राच्यं, ज्ञातवान् भवसप्तकम् ॥ १७ ॥ अहो ! तस्य मुनेस्त्यक्त–सङ्गस्याप्यघहेतुकः । एषोऽहमजनीत्यादि–रनर्थो मन्निमित्तजः ॥ १८ ॥ भवेऽत्रापि स मां कोपात्, पुनश्चेन्मारयिष्यति। तदैवंविधराज्यस्य, भ्रंशो भावी हहा ! मुधा ॥ १९ ॥ अत्र चेदेत्यसौ साधुः, स्वागस्तत् क्षमयाम्यहम् । विमृश्येति कृतं तेन, श्लोकार्द्धं भीतचेतसा ॥ २० ॥ विहङ्गः शबरः सिंहो, द्वीपी सण्डः फणी द्विजः । अन्त्यार्द्धं पूरयेत्तस्य, लक्ष्यमित्युदघोषयत् ॥ २१ ॥ तं पपाठ जनः सर्वः, परं कोऽपि न पूरयेत् । छद्मस्थानां हि दुर्लक्ष्यं, परचित्तोपलक्षणम् ॥ २२ ॥ स एव विहरन्नागात्, मुनिस्तत्र पुरेऽन्यदा । उद्गीयमानं गोपेन, श्लोकखण्डं च शुश्रुवे ॥ २३ ॥ क्षणं विमृश्य ज्ञात्वा चो–त्तरार्द्धमिति सोऽवदत् । येनाऽमी निहताः कोपात्, स कथं भविता हहा ! ॥ २४ ॥ गोपो निशम्य श्लोकं तं, पूर्णं राज्ञे न्यवेदयत् । समस्येयं मयाऽपूरि, स धैर्यमिति सोऽवदत् ॥ २५ ॥ न मनो विस्मितं राज्ञो, निर्बन्धे सत्यमाह सः । श्रुत्वा तत्तत्र गत्वा तं, क्षमयामास पार्थिवः ॥ २६ ॥ स्व स्वापराधं निन्दन्तौ, गर्हन्तौ च परस्परम् । तौ क्षमाधिपती वार्त्तां, चिरं प्रीत्या वितेनतुः । २७ ॥ अत्रान्तरे तयोः पाप–शुध्यर्थं केऽपि सूरयः ।

आजग्मुः केवलज्ञाना–ऽवलोकितजगत्रयाः ॥ २८ ॥ स साधुः स च भूपालो, नन्तुं केवलिनं मुनिम् । आजग्मतुर्महानन्द–पूरितौ भक्तिसंयुतौ ॥ २९ ॥ समाधिना श्रुता ताभ्यां, तत्कृता धर्म्मदेशना। सम्यग् निजं निजं पाप–मुक्तं तस्य पुरः पुनः ॥ ३० ॥ केवली प्राह राजेन्द्र !, गच्छ शत्रुञ्जयं गिरिम् । नमस्यन्नर्हतस्तत्र, ज्ञानं सिद्धिं च लप्स्यसे ॥ ३१ ॥ घनं तवापि कर्मेदं, विना शत्रुञ्जयं मुने ! । क्षयं न यास्यति प्रौढै–स्तपोभिरपि सेवितैः ॥ ३२ ॥ त्वमेनं पुरतः कृत्वा, गुरुं भूपजनैः समम् । शत्रुञ्जयादितीर्थेषु, कुरु यात्रां समाहितः ॥ ३३ ॥ यात्रान्ते सर्वविरतो, निरतो ब्रह्मणि स्थिरे । अनेन मुनिना सार्द्धं, चारित्रं परिपालय ॥ ३४ ॥ इति श्रुत्वा तथा कृत्वा, द्वावप्येतौ क्षमापती। हत्वा हत्यादिपापानि, सिद्धौ शत्रुञ्जयाचले ॥ ३५ ॥ श्रीतीर्थमाहात्म्यमिति श्रवःपुटै–र्निपीयपीयूषमिवाऽतिहर्पितः । त्यजन्तु भो भव्यजनाः ! कुवासना–विपं सुखं मुक्तिभवं भजन्तु च ॥ ३६ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे चतुर्दश उपदेशः ॥ १४ ॥

---

लक्ष्मीः कृतार्था खलु सैव या जिन–प्रासादपूजाद्युपयोगिनी भवेत् ।
सपादकोटीमणिना विभूपितं, हारं यथा श्रीजगडो व्यधापयत् ॥ १ ॥

भूपः कुमारपालाख्यो–ऽन्यदा शत्रुञ्जयं प्रति । यात्रायै प्रगुणीभूतो, बहिष्प्रस्थानमातनोत् ॥ १ ॥ तत्र चाऽवसरे

कश्चि—द्रूपमेत्य व्यजिज्ञपत् । आयाति त्वामुपद्रोतुं, कर्णो डाहलदेशराट् ॥ २ ॥ श्रुत्वेति भूपतिः खिन्नो, ध्वस्तयात्रा-मनोरथः । आगत्य गुरुपादान्ते, स्वं निनिन्द मुहुर्मुहुः ॥ ३ ॥ किञ्चिद्विचिन्त्य तेऽप्याहुः, खेदं राजेन्द्र ! मा कृथाः । द्वादशप्रहरप्रान्ते, समाधिर्भविता तव ॥ ४ ॥ इति स्वस्थीकृते भूपे, निर्णीतसमये ततः । कोऽप्युपेत्य नृपं प्राह, कर्णस्तव रिपुर्मृतः ॥ ५ ॥ रजन्यां विषमे क्वापि, निद्रामुद्रितलोचनः । उल्ललत्तुरगारूढः, कण्ठस्थस्वर्णश्रृङ्खलः ॥ ६ ॥ अन्तःप्रविष्टन्यग्रोध—शाखायां लम्बितः क्षणात् । पञ्चत्वं प्राप्त इत्येत—द्दृष्ट्वा दृष्टाऽहमागतः ॥७॥ शोचयित्वा क्षणं भूपो, द्विसप्ततिनृपैर्युतः । चलितस्तीर्थयात्रायै, समं श्रीहेमसूरिणा ॥ ८ ॥ नवघ्नैकादशस्वर्ण—लक्षेट्छाडादयस्तथा । शतान्यष्टादश प्रौढाः, महेभ्याः प्रस्थिताः समम् ॥ ९ ॥ शतानि त्रिघ्नषड्सप्त—सप्तत्यां सहितानि च । चेलुर्देवा-लयाः स्वर्गि—विमानानीव भास्वराः ॥ १० ॥ गुरूणां जन्मभूमिं स, ज्ञात्वा धन्धुकपत्तने । जोलीविहार इत्याख्यं, प्रासादं निरमापयत् ॥ ११ ॥ प्रभावनां च महतीं, कृत्वा शत्रुञ्जये गतः । तत्रार्चाध्वजदानादि, समं सङ्घेन निर्ममे ॥ १२ ॥ तत्र चावसरे कश्चि—च्चारणः समयोचितम् । पपाठ तादृशाः प्रायो—ऽवसरज्ञाः स्वभावतः ॥ १३ ॥

इकह फुल्लह माटि देइ, जे रिद्धि सुरनरतणी । एन्ही करइं कुसट्टि, बप्प भोलिम जिणवरतणी ॥ १ ॥

नवशः कथनात् नवलक्षीदानम् ॥

कोइ चडावइ पांखडी, को वेचइ धनलाख। फलविहरउ तइं नवि कीओ, भाव भरइ जइ साखि ॥ १ ॥

श्रीसङ्घे मिलिते तत्र, मालोद्घट्टनहेतवे । चतुर्लक्षैरयाचिष्ट, वाग्भटः प्रथमं स्रजम् ॥ १४ ॥ प्रच्छन्नपुरुषः कोऽपि, लक्षैस्तामष्टभिः पुनः । ततः षोडशभिर्लक्षै–र्वाग्भटस्ताममार्गयत् ॥ १५ ॥ एवं प्रवर्द्धमानेऽथ, मूल्ये प्रच्छन्नपूरुषः । सपादकोट्या तां मालां, मार्ग्गयन् प्रकटोऽभवत् ॥ १६ ॥ सामान्यवेषं तं दृष्ट्वा, नृपो मन्त्रिणमब्रवीत् । 'द्रम्मसुस्थं त्वया कार्यं, ततो मन्त्र्यपि तं जगौ ॥ १७ ॥ रे वराक! क्व ते द्रव्यं, कथं च परिधास्यति । मालामैन्द्रीमिमां किं वा, तव व्रीडापि नास्ति भोः! ॥ १८ ॥ सोऽपि तं विजने नीत्वा, तस्मै रत्नमदीदृशत् । सपादकोटिमूल्यं तद्, ज्ञात्वा मन्त्र्यपि तं जगौ ॥ १९ ॥ कुतस्तवेदृशं रत्नं, स प्राहेदृग्विधानि मे । पञ्च रत्नानि विद्यन्ते, तत्सम्बन्धोऽवधार्यताम् ॥ २० ॥ अभूत्मधुमतीपुर्यां, हासाख्यो वणिजां वरः । सौराष्ट्रिको मम पिता, प्राग्वाटज्ञातिमण्डनम् ॥ २१ ॥ आसन्ने मरणेऽन्येद्युः, पित्राऽहमिति भाषितः । मया प्रवहणैर्वत्स !, प्रभूतं धनमर्जितम् ॥ २२ ॥ तेन चैतत्सारभूतं, गृहीतं रत्नपञ्चकम् । गृहाण तदिदं वत्स !, तमाकूतं च मे शृणु ॥ २३ ॥ शत्रुञ्जये रैवते च, तथा श्रीदेवपत्तने। व्ययनीयं त्वयैकैकं, द्वयं चास्तु धनं तव ॥ २४ ॥ इत्युक्त्वा स्वर्ग्गते तस्मिन्, जनन्या सहितस्त्वहम् । अत्रागां सा तु मुक्तास्ति, कपर्दिभवने मया ॥ २५ ॥ श्रुत्वेति सचिवो हृष्ट–स्तं वृत्तान्तं नरेशितुः । न्यवेदयत्ततो भूप–स्तन्मातुः सम्मुखं ययौ ॥ २६ ॥ चैत्ये तत्र समानीय, तां वृद्धां भूरिविस्तरैः । मालां मूर्त्तां गुणश्रेणी–मिव तां पर्यधापयत् ॥ २७ ॥ स्वामिवक्षस्थले हारं, स्फारं निर्माप्य भूपतिः । नायकस्य पदे रत्नं, तदनर्घ्यं न्यचीविशत् ॥ २८ ॥ व्ययि-

त्वेत्यपरं रत्न–द्वयमप्येष पुण्यवान् । भूपश्च सर्वतीर्थेषु, यात्रा कृत्वा गृहं गतौ ॥२९॥ एवं कृतार्थां कमलां विधाय, क्षेत्रेषु सप्तस्वपि भाग्यभाजः । नृनाकिसौख्यान्यखिलानि भुक्त्वा, क्रमेण मोक्षाध्वनि सञ्चरन्ति ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे पञ्चदश उपदेशः ॥ १५ ॥

---

यात्रां सृजन्तो विदधत्यमात्रां, भक्तिं जिने ते सुखिनो नरा स्युः ।
शत्रुञ्जयादौ कृतपूर्विणस्तां, मुक्तिं ययुः श्रीभरतादयो यत् ॥ १ ॥

एकदा विहरन् स्वामी, वृषभो जिनपुङ्गवः । विनीतोद्यानमायातो, देववृन्दनिषेवितः ॥ १ ॥ हस्तिस्कन्धसमारूढ–श्चतुरङ्गचमूयुतः । प्रासस्तं वन्दितुं तस्य, देशनामशृणोदिति ॥ २ ॥ सङ्घस्य भक्तिः सुकुलप्रसूतिः, सुपात्रदानं शुभवित्तयोगः । सङ्घाधिपत्यं च सुतीर्थसेवा, लभ्यानि भाग्यैः प्रचुरैरमूनि ॥ ३ ॥ पप्रच्छ भरतः स्वामिन् !, किं सङ्घाऽधिपतेः पदम् । को विधिस्तत्र किं कार्यं, कार्यं प्राप्यं कथं च तत् ? ॥ ४ ॥ स्वाम्याह—

यच्छन्पञ्चविधं दान–मुद्धरन् दीनसञ्चयम् । पुरे पुरे जिनागारे, कुर्वाणो ध्वजरोपणम् ॥ ५ ॥ शत्रुञ्जयादितीर्थेषु, गुर्वादेशवशंवदः । इन्द्रोत्सवादिकं कृत्यं, कुर्वन् सङ्घपतिर्भवेत् ॥ ६ ॥

भरतश्चिन्तयति—

कथं तत्पुरुषेणास्तु, मयि सङ्घपतिश्रुतिः । चेद्बहुव्रीहिणा सा स्या-द्धन्यंमन्यस्तदाऽस्म्यहम् ॥ ७ ॥ वन्दित्वा भरतः प्राह, तर्हि स्वामिन्निदं पदम् । मह्यं प्रासादमाधाय, देहि देहिप्रियङ्करम् ॥ ८ ॥ इन्द्रादिभिस्ततो देवैः, सङ्घेन सहितो विभुः । उत्थायाऽक्षतवासांश्च, चिक्षेप भरतोपरि ॥ ९ ॥ शक्रस्तदानीमानीय, मालां दिव्यां महीपतेः । तत्पत्न्याश्च सुभद्रायाः, कण्ठे निक्षिप्तवान्मुदा ॥ १० ॥ ततः सकलसामग्र्या, यात्रायै प्रस्थितो नृपः । शक्रोपनीत-सौवर्ण-देवालयपुरस्सरम् ॥ ११ ॥ हस्त्यश्वरथपादातैः, प्रौढैः परिवृढैर्युतः । सपादकोटितनयै-रत्नाद्यैश्च विराजितः ॥ १२ ॥ अथ सोमयशा राजा, शतपत्तननायकः । द्वियुक्सप्ततित्रिघ्नाऽष्ट-सहस्रतनयाङ्गनः ॥ १३ ॥ लक्षद्विपेन्द्र-पञ्चघ्न-सप्तलक्षतुरङ्गराट् । सपादकोटिपादाति-राजसप्तशतीवृतः ॥ १४ ॥ युगघ्नैकादशप्रौढ-रथलक्षसमन्वितः । द्वात्रिंशल्लक्षसुग्राम-स्वामी प्रस्थितवान् सह ॥ १५ ॥ त्रिभिर्विशेषकम् ॥

वैताढ्ये षष्टिपञ्चाशन्नगराणामधीश्वरः । अचलद्विनमेः पुत्रो, राजा गगनवल्लभः ॥ १६ ॥ वज्रनाभः पूर्वदिशः, स्वामी पश्चिमनायकः । कल्याणकेतुराजेन्द्र-श्चत्वारोऽमी महाधराः ॥ १७ ॥ प्रत्यहं कुरुते चक्री, प्रयाणं योजनाऽवधि । रत्नानुभावसम्पन्न-सद्यस्काशेषवाञ्छितः ॥ १८ ॥ यथाकालं यथायोग्यं, क्षणादेव यथेप्सितम् । निर्मीयन्ते महोत्तुङ्गा, गृहा वर्द्धकिना पुनः ॥ १९ ॥ सुराष्ट्रासु गते सङ्घे, शक्तिसिंहनरेश्वरः । भातृव्यः सम्मुखं प्राप्त-श्चक्रिणः प्रणतिं व्यधात् ॥ २० ॥ दृष्टे श्रीपुण्डरीकाद्रौ, सर्वेषां हर्षपूरणात् । भरतः स्थापयामास, पुरमानन्दपूर्वकम् ॥ २१ ॥

चैत्यमपरेष्वेवं च तीर्थेष्वपि, प्राज्यं पुण्यमुपार्ज्य सङ्घसहितः प्राप्तो विनीतापुरि ॥ ३४ ॥ किञ्चिन्न्यूनानि षट्पूर्व-लक्षाणि भरतेश्वरे । राज्यं कुर्वति राजानः, एतावन्तोऽत्र सङ्घपाः ॥ ३५ ॥ नवनवतिकोटिरधिकाः, लक्षैरेकोननवति-परिमाणैः । चतुरधिकाशीतिमितैः, सहस्रकैश्चापि भूमिभुजाम् ॥ ३६ ॥ इति भरतचक्रवर्त्ति-विलासभवनेऽप्यवास-वरसंवित् । प्रतिपाल्य पूर्वलक्षं, श्रामण्यं सिद्धिमध्यास्त ॥ ३७ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे षोडश उपदशः ॥ १६ ॥

---

श्रीतीर्थयात्रामतिमात्रभक्त्या, वितन्वते ये मनुजौघयुक्ताः । आभूरिव प्रौढसमृद्धियुक्ता-स्ते पूजनीया जगतां भवन्ति ॥१॥

थारापद्रपुरे आभूः, समग्रसचिवाऽग्रणीः । जिनधर्म्मरतः श्रीश्री-मालज्ञातिशिरोमणिः ॥ १ ॥ पश्चिमामण्डलीकेति, बिभ्राणो विरुदं महत् । भूरिद्रविणकोटीश-आभूः श्रीद इवाऽभवत् ॥ २ ॥ शत्रुञ्जयेऽन्यदा नन्तुं, श्रीयुगादि-जिनेश्वरम् । भूरिसङ्घयुतोऽचालीत्, आभूः सङ्घपतिर्मुदा ॥ ३ ॥ चेलुर्देवालयाः सप्त-शतानि स्वर्विमानवत् । सुखा-सनरथस्फार-वाहिन्यो भूरिशः पुनः ॥ ४ ॥ चत्वारिंशत्सहस्राणि, शकटानां विरेजिरे । दशोत्तरा पञ्चशती, तुरगाणां सहाऽचलत् ॥ ५ ॥ द्वाविंशतिशतान्युष्ट्राः, शतमेकं कटाहिकाः । ताम्बूलिकाः कान्दविकाः, सूपकाराः शतप्रमाः ॥ ६ ॥ शतमेकं त्रिषष्टिश्च, तत्राट्टानि स्फुटान्यभुः । प्रपाः सप्त विभान्ति स्म, मालाकारशतोभयी ॥ ७ ॥ शतानि

सप्त महिषाः, नीरानयनहेतवे । मनुष्याश्वतरादीना–मियत्ता तु न विद्यते ॥ ८ ॥ शोपयंस्तटिनीकूप–सरस्यादिजलाशयान् । आभुसङ्घपतिर्मार्गे, क्रामति स्म शनैः शनैः ॥ ९ ॥ दृष्टिमार्ग्गगते शत्रु–ञ्जये तीर्थेश्वरे तदा । सङ्घभक्तिं चकाराभू–र्वस्त्रालङ्करणादिभिः ॥ १० ॥ शत्रुञ्जयाद्रिमारुह्य, स्नात्रपूजाध्वजादिभिः । आभूश्चकार सफलं, निजं जन्म महोत्सवैः ॥ ११ ॥ रैवताद्रौ ततो गत्वा, जिनं राजीमतीपतिम् । समं समग्रसङ्घेन, प्राणमत्प्रणयाञ्चितः ॥ १२ ॥ द्वादशस्वर्णकोटीनां, व्ययं कृत्वा महोत्सवैः । आभुः प्रथमयात्राया–मागान्निजपुरं क्रमात् ॥ १३ ॥ व्योमचन्द्रेपुभूसंख्या १५१० प्रतिमा यो व्यधापयत् । अतुच्छैरुत्सवैः सप्त–शताचार्यपदानि च ॥ १४ ॥ व्ययित्वा द्रव्यकोटीश्च, तिस्रश्चामीकरस्य सः । एकां हैमाक्षरां सर्व–वर्त्तमानागमप्रतिं ॥ १५ ॥ वर्त्तमानाऽखिलग्रन्थां, द्वैतीयीकीं पुनः प्रतिम् । मष्यक्षरमयीं मन्त्री, लेखयामास भक्तितः ॥ १६ ॥ प्रासादौ सचिवः सारू–आरघाटमयौ तथा । कारयामास सूनेत–माह्लकग्रामयोः पुनः ॥ १७ ॥ चतुर्युताशीतिमित–प्रासादेष्वर्हतां भवेत् । यावान् द्रव्यव्ययस्तावा–नेकस्मिन् सारूआरके ॥ १८ ॥ अन्यान्यपि स चैत्यानि, स्थाने स्थाने च भूरिशः । कारयामास मन्त्रीशः, सस्वर्णकलशान्यपि ॥ १९ ॥ श्राद्धान् पष्ट्यधिकांस्त्रीणि, शतानि निजसन्निभान् । अर्प्पयित्वा रमामाभू–श्चक्रेऽर्हन्मतवासितः ॥ २० ॥ अवसाने तु जग्राह, सैप संस्तारकव्रतम् । तत्र व्ययितवान् सप्त–कोटीश्चामीकरस्य सः ॥ २१ ॥ संस्तारकव्रतं सम्यक्, पालयंस्त्यक्तभोजनः । आभूः सङ्घपतिः शुद्ध–ध्यानवान् स्वर्ग्गमीयिवान् ॥ २२ ॥ प्रतिवर्षं विधीयन्ते, यात्राः

कैश्चन धार्मिकैः । जन्मन्यपि न ये यात्रां, कुर्वते ते महालसाः ॥ २३ ॥ या त्रायते भीमभवाटवीभयात्, यात्राऽर्हती सेति निरुक्तमुच्यते । ज्ञात्वेति भव्यैर्भवभञ्जनेच्छया, कार्यं तथा स्यात् प्रतनुर्भवो यथा ॥ २४ ॥

॥ इति श्रीउपदेशसप्ततिकायां द्वितीयेऽधिकारे सप्तदश उपदेशः ॥ १७ ॥

---

इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिपदकमलमरालमहोपाध्यायश्रीचारित्ररत्नगणिविनेयपं०सोमधर्म्म-गणिविरचितायां श्रीउपदेशसप्ततिकायां श्रीतीर्थाधिकारो द्वितीयः ॥ २ ॥ इति श्रीदेवतत्त्वं सम्पूर्णम् ॥

---

## ॥ अथ श्रीगुरुतत्त्वाधिकारस्तृतीयः प्रारभ्यते ॥

तत्र श्रीगुरुलक्षणं चेदम्—

निवर्त्तयत्यन्यजनं प्रमादतः, स्वयं च निष्पापपथे प्रवर्त्तते ।
गृणाति तत्त्वं हितमिच्छुरङ्गिनां, शिवार्थिनां यः स गुरुर्निगद्यते ॥ १ ॥

ततश्च श्रीगुरूणां गुणोत्कीर्त्तनेन विधिना कृतिकर्म्मप्रदानैर्विनयभक्तिबहुमानादिभिश्च सम्यग् विवेकवताराधनं कार्यं कलियुगे तदायत्तत्वाच्छ्रीजिनधर्म्मस्य । यदुक्तम्—कइआवि जिणवरिंदा, पत्ता, आयरा, आयरिए० ॥ १ ॥

श्रीगुरुगुणोत्कीर्त्तने पद्मशेखरनृपोदाहरणम् । यथा—

पृथ्वीपुरे पुरे पद्मशेखरो राजाऽतीवधर्म्मपरोऽन्यानपि धर्मे प्रवर्त्तयति, लोकानां पुरतो गुरुगुणांश्च कीर्त्तयति । तथाहि—

खंता दंता संता, उवसंता रागरोसपरिचत्ता । परपरिवायविरत्ता, अपमत्ता जे उ ते गुरुणो ॥ १ ॥

वंदिज्जमाणा न समुक्कसंति, हीलिज्जमाणा न समुज्जलंति ।
दंतेण चित्तेण चरन्ति धीरा, मुणी समुग्घाइअरागदोसा ॥ २ ॥

दुविहे गुरू पन्नत्ते, तंजहा—तवोवउत्ते, नाणोवउत्ते अ । तत्थ तवोवउत्ते बडपत्तसमाणे, केवलं अप्पाणं तारेइ । नाणोवउत्ते जाणवत्तसमाणे, अप्पाणं परं च तारेइ ।

इत्यादि श्रीगुरुगुणवर्णनैर्भूयान् जनस्तेन स्थापितो धर्म्मे। परमेको विजयो नाम वणिग् नास्तिकमतानुसारी इति भणति, दुःशकानि रोद्धुमिन्द्रियाणि स्वस्वमार्ग्गानुगामुकानि । आत्मशोषणमात्रमेव तपः । केन दृष्टौ स्वर्ग्गापवर्गौ । उक्तं च—

हत्थागया इमे कामा, कालिआ ते अणागया । को जाणइ परे लोए, अत्थि वा नत्थि वा पुणो ॥ १ ॥

ततो न किञ्चिदेतत् । इत्थं तेनापि भूयान् जनो विप्रतारितः । एवं च तस्मिन् नगरे तौ द्वावपि पुण्यपापोपदेशकुशलौ प्रत्यक्षाविव सुगतिदुर्गतिमार्ग्गौ समजायेतां । अन्यदा तत्स्वरूपं नृपेण ज्ञात्वा प्रच्छन्नं निजजनपार्श्वात्तद्गृहे हारमेकं लक्षमूल्यं तदीयाभरणकरण्डके प्रक्षेप्य नगरे च पटहो दापितः । 'यो राज्ञो हारं गतं सम्प्रति कथयिष्यति तस्य न दण्डः, पश्चात्तु यस्य गृहे लप्स्यते तस्य दण्डो विधास्यते' इत्यादि । यावन्न कोऽपि मन्यते ततः सर्वगृहशोधनपूर्वं शोधितं तस्यापि गृहं, लब्धो हारः । धृतो राजपुरुषैः श्रेष्ठी । आनीतो राजसमीपे । आदिष्टोऽसौ वराको वध्यः । न च कोऽपि तं मोचयति । स्वजनादिबहूक्ते राजा वदति—

जइ मम पासाओ ति-ल्लपुन्नपत्तं गहित्तुं बिंदुंपि । अचयंतो सयलपुरे, भमिउं पुण ठवइ मह पुरओ ॥ १ ॥

एवं यदि करोति तदैवास्य मोक्षो नान्यथा। तेन तदपि मरणभीत्त्या प्रतिपन्नम्—

तत्तो निरूविआइं, सयलपुरे पउमसेहरनिवेण। पडुपडहवेणुवीणा—इं सद्दउद्दामहरिसाइं ॥ १ ॥

अइलडहरूवलवणिम—सुवेसवेसाविलासकलिआइं। सचिंदिअसुहआइं, पए पए पिच्छणसयाइं ॥ २ ॥

स च तेषु विशेषतो रसिकोऽपि तस्मिन्नेव भाजने निहितदृष्टिरुभयपार्श्वनृपनियुक्तखड्गव्यग्रकरसुभटक्रियमाण-
नानाविभीषिकाभिर्भाप्यमानः सकलपुरे भ्रामयित्वा आनीतः। नृपोऽपीपद्विहस्य तं प्रति प्राह, भो ! अत्यन्तचञ्च-
लानि मनःकरणानि कथं भवता रुद्धानि ?। तेनोक्तं, स्वामीन् ! मरणभीरुतया। नृपः प्राह, यद्येकभवार्थं त्वया अप्र-
मादः सेवितः, तर्ह्यनन्तसंसारमरणभीरवः साध्वादयः कथं प्रमादं कुर्युः ?। श्रेष्ठिराज ! आकर्णय हितवचनम्—

यत्करोति विकथाः प्रथावती—र्यत्खलेषु विषयेषु हृष्यति। सुप्तमत्त इव यद्विचेष्टते, यन्न वेत्ति गुणदोषयोर्भिदाम् ॥१॥

क्रुध्यति स्वहितदेशनेऽपि य—द्यच्च याति नरकादियोनिषु। लोक एष निखिलं दुरात्मन-स्तत्प्रमादकुरिपोर्विजृम्भितम् ॥२॥

तेन मा कार्षीः प्रमादम्। यजस्व जिनम्। भजस्व गुरुम्। पालय षडावश्यकविधिम्। मा पत संसारकूपे। इत्यादि
तदीयशिक्षया प्रतिबुद्धोऽसौ सत्यः श्रावको जातः। पद्मशेखरनृपोऽपि क्रमेण गुरुगुणवर्णनपरो बहुलोककृतपुण्य-
लाभः सुकृतिं प्राप ॥

श्रुत्वेति कुग्रहविनिग्रहणैकमन्त्रं, श्रीपद्मशेखरनरेश्वरसच्चरित्रम्।

सज्ज्ञानदर्शनचरित्रभृतां गुरूणां, भव्या जनाः ! गुरुगुणान् परिकीर्त्तयन्तु ॥ १ ॥

॥ इति श्रीउपदेशसप्ततिकायां तृतीयेऽधिकारे प्रथम उपदेशः ॥ १ ॥

---

ददाति यो वन्दनकानि पादयोः, श्रीमद्गुरूणां विनयेन भावितः ।
उच्चैः पदं तस्य न दुर्लभं भवे-दर्थेऽत्र कृष्णः क्रियते निदर्शनम् ॥ १ ॥

अस्ति द्वारवती नाम, पुरी सुरपुरीसमा । अपसार्य समुद्रं यां, धनदेन विनिर्मिता ॥ १ ॥ कंसकैटभचाणूर-जरासन्धादिवैरिजित् । वासुदेवोऽन्तिमस्तत्र, भुङ्क्ते साम्राज्यसम्पदम् ॥ २ ॥ यस्य क्षायिकसम्यक्त्वं, परदोषाऽविकत्थनम् । अपयुद्धनिषेधश्च, गुणा लोकोत्तरा अमी ॥ ३ ॥ दीक्षां जिघृक्षुर्यः कोऽपि, तनयस्तन्निषेधनम् । तेन न क्रियते कन्या-विवाहेऽस्य तु निर्णयः ॥ ४ ॥ यदा विवाहयोग्या स्यात् , पुत्री तज्जननी तदा । विभूष्य प्रेषयत्यन्तः-सभं कृष्णोऽपि तां वदेत् ॥५॥ त्वं भविष्यसि किं राज्ञी, दासी वति वदाऽङ्गजे ! । राज्ञी यदि तदा तस्या-स्तपस्यां दापयत्यसौ ॥ ६ ॥ करोति कारयत्यन्यै-रतुच्छोत्सवसन्ततिम् । श्रामण्यं तत्त्वतः शक्र-राज्यादप्यधिकं यतः ॥ ७ ॥ चेद्दासी तत्तदीया या, जनन्या एव मन्दिरे । तां प्रेषयति सैवाऽस्याः, विवाहादि करोति च ॥ ८ ॥ स्वमातृशिक्षिता काचि-दन्यदा तनयावदत् । अहं दासी भविष्यामि, हृदि दध्यौ हरिस्ततः ॥ ९ ॥ कयापि शिक्षिता नून-मियं मुग्धा वदत्यदः । अस्यास्तथा करिष्येऽहं, यथाऽन्याऽपीति वक्ति न ॥ १० ॥ अस्ति शालापतिस्तस्य, वीरनामा सुसे-

वकः । आबाल्यादपि तद्वृत्तं, वेत्ति हास्यकरं हरिः ॥ ११ ॥ दित्सुस्तां तनयां तस्मै, सभ्याना पुरतो जगौ । स्तुति-
रूपेण तद्वृत्तं, नीचमप्युच्चतां नयन् ॥ १२ ॥ भो भो निभाल्यतां सभ्याः ! वीरोऽयं वीरपुङ्गवः । एतत्पराक्रमप्रौढिः,
श्रूयतां निगदाम्यहम् ॥ १३ ॥ जेण घोसवई सेणा, वसन्ती कलसीपुरे । झम्पिआ वामहत्थेण, वेमई नाम खत्तिओ
॥ १४ ॥ जेण रत्तफणो नागो, वसन्तो बदरीवणे । आहओ पुढविहत्थेण, वेमई नाम खत्तिओ ॥ १५ ॥ जेण चक्कु-
क्खई गंगा, वहन्ती कलुसोदगम् । धारिआ वामपाएण, वीरओ नाम खत्तिओ ॥ १६ ॥ तदेष विक्रमी वर्यः, क-
न्याया उचितो वरः । इदृक्षो नेक्ष्यतेऽन्यस्तु, यो मह्यं हृदि रोचते ॥ १७ ॥ आज्ञाशूरस्य तस्यैत-द्वचोऽतिक्रमभीरवः ।
ओमिति प्रत्यपद्यन्त, समग्रं ते सभासदः ॥ १८ ॥ अरोचमानोऽप्यन्येभ्य-स्तयोः पाणिग्रहो मिथः । कारितो वासु-
देवेन, किमसाध्यं हि तादृशाम् ॥ १९ ॥ गता तस्य गृहे सापि, स्फाराऽलङ्कारधारिणी । वर्यपल्यङ्कमारूढा, देवीव
भुवमागता ॥ २० ॥ न तस्य गेहकृत्यानि, विनयं चापि नाकरोत् । स एव किन्तु सञ्जात-स्तदादेशवशंवदः ॥ २१ ॥
वासुदेवाच्छङ्कमान-स्तां सुरीमिव मन्यते । सोऽपि तस्याऽभिसन्धिं तु, न वेत्ति हृदि संस्थितम् ॥ २२ ॥ आलापि-
तोऽन्यदा वीरः, कृष्णेन गृहिणी तव । कृत्यानि कुरुते नो वा, विनीतः सोऽपि तं जगौ ॥ २३ ॥ त्वत्सुता वर्यसौ-
न्दर्या, देवीवाराध्यते मया । हसन्ति सभ्याः सर्वेऽपि, वासुदेवोऽपि तं जगौ ॥ २४ ॥ तस्याः पार्श्वात्समस्तानि, गे-
हकृत्यानि कारयेः । मनागपि भमाशङ्कां, तस्या अपि च मा कृथाः ॥ २५ ॥ गृहागतः स तां गाढं, तर्जयामास

पापिनि ! । उपविश्य स्थिता कस्मा–दुत्तिष्ठ कुरु पाजनीम् ॥ २६ ॥ परिकर्म्मय सूत्राणि, प्रमार्जय गृहाङ्गणम् । नि-र्व्यापारा मम गृहे, कियत्कालं ललिष्यसि ॥ २७ ॥ तेनेत्याक्रुश्यमाना सा, रुष्टा पितृगृहं गता । सगद्गदं जनन्यादेः, स्वदुःखं प्राह तत्कृतम् ॥ २८ ॥ हरिरप्याह रे मूर्खे !, त्वदुक्तं विहितं मया । सा श्रूतेऽहं भविष्यामि, राज्ञी तर्हि प्रसीद माम् ॥ २९ ॥ हसित्वा हरिरप्याह, त्वद्भर्त्ता चेद्ददत्यथ । राज्ञी त्वं हि तदैव स्याः, ततः सापि तथा व्यधात् ॥ ३० ॥ तस्यानुमत्या सा दीक्षा–मादत्ते स्म सविस्तरम् । श्रीनेमिपार्श्वे दुःखौघ–च्छेदाच्च सुखिताऽभवत् ॥ ३१ ॥ अष्टादश सहस्राणि, स्वामिनः साधवस्तदा । परिवारे भवंस्तत्र, श्रीकृष्णः स्वामिनं जगौ ॥ ३२ ॥ भगवन् ! सर्वसा-धूना–मद्य वन्दनकान्यहम् । अस्मि दित्सुर्यदि भव–त्यादेशो भवतां प्रभो ! ॥ ३३ ॥ दृष्ट्वा लाभमनुज्ञातः, कृति-कर्म्माणि दत्तवान् । ऋषीणां षोडशक्ष्माप–सहस्रपरिवारितः ॥ ३४ ॥ चटत्प्रकर्षहर्षेण, पूरितो भक्तिभासुरः । तदा स शुशुभे शत्रु–च्छेदोद्यतभटो यथा ॥ ३५ ॥ अन्तराले नृपा अन्ये, श्रान्तास्तानि ददुर्न ते । स्वामिभक्त्या पुनर्वीरः, प्रान्तं यावद्वितीर्णवान् ॥ ३६ ॥ षष्टियुक्त्रिशतीयुद्धे–ष्वेतावान्न श्रमोऽभवत् । यावन्ममाऽधुना जातो, भगवन् ! भावि किं फलम् ? ॥ ३७ ॥ इति कृष्णेन पृष्टः स–न्प्रभुः प्राह त्वया हरे ! । निरस्तो नरकस्तुर्य–स्तीर्थकृत्कर्म्म चार्जि-तम् ॥ ३८ ॥ फलप्रश्ने तु वीरस्य, यत्त्वं तुष्टः प्रदास्यसि । अनेन तव भक्त्यैव, दत्तानि न तु भावतः ॥ ३९ ॥ इत्याद्यन्यदपि स्वामि–पार्श्वे पृष्ट्वा प्रणम्य तम् । गोविन्दोऽन्येऽपि लोकाश्च, गताः स्वस्वगृहं क्रमात् ॥ ४० ॥

द्रव्यभावकृतिकर्म्मविधाना–दित्थमौच्यत निदर्शनमेतत् । तेन तानि गुणदोपविवेका–द्दीयतां गुरुपदाम्बुजयुग्मे ॥४१॥

॥ इति श्रीउपदेशसप्ततिकायां तृतीयेऽधिकारे द्वितीय उपदेशः ॥ २ ॥

---

सम्यगहृदयशुद्ध्या, श्रीगुरुपादा निषेविताः । तुष्यन्त्यत्रोच्यते योगि–नागार्जुननिदर्शनम् ॥ १ ॥

विद्याधराभिधे स्वच्छ–गच्छे विख्यातकीर्त्तयः । श्रीपादलिप्तनामानो, जज्ञिरे सूरिपुङ्गवाः ॥ १ ॥ येषां श्रीगुरवो बाल्ये, मुदिता गाथयैकया । पादलेपाभिधां विद्यां, ददुराकाशगामिनीम् ॥ २ ॥ इयं च गाथा—

अंबं तंबच्छीए, अपुप्फिअं पुप्फदंतपंतीए । नवसालिकंजिअं नव–वहूइ चड्डुएण मे दिन्नं ॥ १ ॥

शत्रुञ्जयाष्टापदरैवतार्बुदे, संमेतशैले वरतीर्थपञ्चके । जिनान्नमस्कृत्य सुविद्यया तया, वितेनिरे भोजनमन्यथा न ते ॥ ३ ॥ समग्रविकृतित्यागा–द्येषां केवलमोदनम् । गृह्णतामारनालेन, बभूवुर्नैकलब्धयः ॥ ४ ॥ कपटश्रावकीभूय, योगी नागार्जुनोऽन्यदा । विद्याम्नायं जिघृक्षुस्तं, गुरुपादान्यपेवत ॥ ५ ॥ नित्यं वन्दनकाऽन्येष, ददाति गुरुपादयोः । लब्धलक्षतया जिघ्र–न्नेव वेत्त्यौषधान्यपि ॥ ६ ॥ क्रमात्सप्तोत्तरशतं, ज्ञातवानौषधव्रजम् । अष्टोत्तरशततम–मभ्यासाऽभावतो न तु ॥ ७ ॥ सम्मील्य तानि तल्लेपं, येन तेनापि वारिणा । विधाय पादयोर्दत्ते, व्योमोत्पतनकाम्यया ॥८॥

पतनोत्पतनान्यस्य, तत्प्रभावाद्वितन्वतः । सत्याम्नायं विना किन्तु, देहे जाता क्षतावली ॥ ९ ॥ पप्रच्छुर्गुरवो भद्र !, तव केयं क्षतावली। मूलादारभ्य वृत्तं स्वं, सोऽप्युवाच यथाकृतम् ॥ १० ॥ तद्बुद्धिरञ्जितास्तस्य, स्वीकार्य द्वादशव्रतीम् । विधाय श्रावकं सत्यं, तदाम्नायौषधं जगुः ॥ ११ ॥ अमीषामौषधानां त्वं, षष्टितन्दुलपाथसा । विधेहि लेपं चेद् व्योम–न्युत्पित्सा तव वर्त्तते ॥ १२ ॥ इति श्रुत्वा तथा कृत्वा, सिद्धसर्वमनोरथः। प्रभावयन् जिनमतं, स श्राद्धः परमोऽभवत् ॥ १३ ॥ अत एव निषेव्यन्ते, हार्दभक्त्या विवेकिना । गुरुदेवपितृक्ष्माप–प्रमुखाः सत्फलार्थिना ॥१४॥ अन्यदा योगिना तेन, स्वर्णसिद्धिकरो रसः । सहस्रवेधी सम्मील्य, बहुद्रव्याणि साधितः । ॥ १५ ॥ आत्मीयजनहस्तेन, भृत्वा काचस्य कुम्पकम् । तं रसं प्राभृतीचक्रे, तेषामेव स्वभक्तितः ॥ १६ ॥ सूरयोऽप्यूचिवांसस्तं, जनं नामितमस्तकम् । किमिदं प्राभृतं वत्स !, केन वा प्रेपितं वद ॥ १७॥ सोऽप्युवाच प्रभो ! नागाऽ–र्जुनेन प्राभृतीकृतः। स्वर्णसिद्धिकरो ह्येष, रसस्त्रैलोक्यदुर्लभः ॥ १८ ॥ आह तस्यास्मदीयस्य, विनेयस्य कृतज्ञता । येनेत्थं नव्यनिष्पन्नो, रसोऽयमुपदीकृतः ॥ १९ ॥ परं वयं परित्यक्त–बहिरन्तःपरिग्रहाः। नेच्छामो मनसाप्येनं, तृणस्वर्णसमस्पृहाः ॥२०॥ अनर्थहेतुनाऽनेन, किमित्यालोच्य चेतसि । एष मुग्धोऽथवाऽस्माक–माचारमपि वेत्ति न ॥ २१ ॥ रक्षास्थण्डिलमानाय्य, तं रसं तत्र चिक्षिपुः । भृतवन्तः पुनः कुम्पं, निजप्रश्रवणेन ते ॥ २२ ॥ तस्मै तमार्पयंस्तेन, वृत्तज्ञापनपूर्वकम् । सोऽपि कोपमनाः प्राप–दुपनागार्जुनं जनः ॥ २३ ॥ ज्ञापिते तेन तद्वृत्ते, योगी दध्यौ रुषारुणः । अहो !

विवेक एतेषा–महो ! प्रत्यूपकारिता ॥ २४ ॥ अमी मलीमसा लोक–व्यवहारबहिर्मुखाः । पशुप्रायाः स्वपरयो–रपि व्यक्तिं न जानते ॥ २५ ॥ इत्याद्यनल्पसङ्कल्पान्, हृदि ध्यात्वा शिलातले । क्वापि तं कुम्पकं बाढं, स्फोटयामास निर्दयम् ॥ २६ ॥ क्षणान्तरे च सा जाता, शिला सर्वा हिरण्मयी । सकौतुकं सनिर्वेदं, पुनर्योगीत्यचिन्तयत् ॥ २७ ॥ अहो ! श्रीगुरुपादानां, प्रभावः कोऽपि नूतनः । यदीयमलमूत्राद्य–मपि स्वर्णस्य कारकम् ॥ २८ ॥ कटरे ! तपसः शक्ति–र्वपुरे ! भाग्यवैभवम् । स्वर्णपुंवद् यदीयेयं, तनुः सर्वापि रैमयी ॥ २९ ॥ मया क्लेशसहस्रेण, रससिद्धि–र्विधीयते । अमीषां तु स्वभावेन, सा वपुःस्थैव विद्यते ॥ ३० ॥ इत्यवेत्य समागत्य, नत्वा तांश्च युगोत्तमान् । स्वकीयमपराधं स, क्षमयामास योगिराट् ॥ ३१ ॥ ततो नागार्जुनस्तान् श्री–गुरून् कल्पद्रुमानिव । चिरमाराधयामास । वन्दनस्तवनादिभिः ॥ ३२ ॥

इति सुरवल्लीमिव ये, मनुजा आराधयन्ति गुरुभक्तिम् । तेषामखिलसमीहित–पदार्थसिद्धिर्भवत्यचिरात् ॥ ३३ ॥

॥ इति श्रीउपदेशसप्ततिकायां तृतीयेऽधिकारे तृतीय उपदेशः ॥ ३ ॥

---

साधर्मिकास्था गुरुभक्तितीर्थो–न्नती निवृत्तिश्च परिग्रहादेः ।
अमी गुणाः पेथडदेवसाधो–र्यथा बभूवुर्न तथा परेषाम् ॥ १ ॥

वणिग् विद्यापुरे पेथा–ऽभिधो वसति निर्द्धनः । श्रीधर्म्मघोषसूरिभ्यः, श्रीधर्म्मप्रतिपत्तिकृत् ॥ १ ॥ परिग्रहप्र-

माणे च, तेषामेवाऽन्तिकेऽन्यदा । द्रम्मपञ्चशती स्वार्थे, यावन्नियमयत्यसौ ॥२॥ तावन्निषिद्धो गुरुभि–र्ज्ञात्वा तद्भाग्यमुल्बणम् । तथा कार्यं यथा भद्र !, व्रतभङ्गो भवेन्न ते ॥ ३ ॥ ममैतावन्ति भाग्यानि, क्व स्युः यैरहमृद्धिमान् । तथापि पञ्चलक्षेभ्योऽभ्यधिकं मे न कल्पते ॥ ४ ॥ त्वमिभ्यो भविता वत्स !, तव भाग्यं महद्यतः । इति श्रुत्वा गुरून्नत्वा, स प्राप्तो निजमन्दिरम् ॥ ५ ॥ तत्र दुर्भिक्षतोऽन्येद्यु–र्निर्वाहस्याप्यसम्भवे । भार्याप्रथमिनीयुक्तः, प्रस्थितो मालवं प्रति ॥ ६ ॥ क्रमान्मण्डपदुर्गस्य, प्रतोलीं यावदागतः । तावद्वामा स्वरं चक्रे, दुर्गा सर्पशिरःस्थिता ॥ ७ ॥ स तदाश्चर्यमालोक्य, भीतो यावद्विलम्बते । तावत्तमाह शास्त्रज्ञः, कोऽपि मुग्धोऽसि भो वणिक् ! ॥ ८ ॥ पूर्वं चेदगमिष्यस्त्वं, तद्भूपोऽत्र त्वमेव भोः ! । अभविष्य इदानीं तु, भावी तत्प्रतिरूपभाक् ॥ ९ ॥ तेनेत्युत्साहितः प्राप्तः, स पुरान्तःकृतस्थितिः । क्रमात्सारङ्गदेवस्य, राज्ञो मन्त्रिपदं दधौ ॥ १० ॥ ततः प्राप्ताधिकारोऽपि, न मुमोच स्वनिश्चयान् । मर्यादामुज्जिहीते किम्, पयःपूरेऽपि सागरः ? ॥ ११ ॥ नागवल्लीदलान्येष, विना सचित्तमत्यजत् । सर्वं भूपसभे तस्य, निःश्रीकं मुखमन्यथा ॥ १२ ॥ यदा पर्यङ्किकारूढः, सभां याति स मन्त्रिराट् । तदोपदेशमालायाः, गाथामेकां पठत्यसौ ॥ १३ ॥ राजकार्यव्यापृतत्वा–त्तस्य वेलाऽन्यदा तु न । आलोचादेरभावेन, निर्व्यापारो ह्यसौ तदा ॥ १४ ॥ इत्थं पपाठ तां पूर्णां, कियद्भिरपि वासरैः । अहो ! ज्ञानोद्यमस्तस्य, कस्य नो विस्मयावहः ? ॥ १५ ॥ इति पेथडदेमन्त्री, प्रतिष्ठां प्राप्य भूपतेः । श्रीधर्म्मोऽपि प्रतिष्ठायां, तेन प्राप्यत तद्यथा ॥ १६ ॥ सप्तलक्षैर्मनुष्याणां, द्वापञ्चाशज्जिना-

लयैः । श्रीतीर्थद्वययात्रायै, चलितः पेथडोऽन्यदा ॥ १७ ॥ स च दैगम्बरश्चापि, सङ्घौ युगपदागतौ । गिरिनारे विवादोऽभू–त्तीर्थात्मीकरणे तयोः ॥ १८ ॥ उभयोरिन्द्रमालां यः, परिधास्यति सङ्घपः । तस्य तीर्थमिदं भावि, तदेति स्थविरा जगुः ॥ १९ ॥ तदा च सहसोत्थाय, पेथडः पुण्यपेशलः । ऐन्द्रीं परिदधे मालां, तीर्थमात्मीचकार च ॥ २० ॥ त्रिघ्नसप्तप्रमास्तेन, स्वर्णघट्यो व्ययीकृताः । अहो ! उच्चपदप्राप्त्यै, पुरुषाणामुपक्रमः ॥ २१ ॥ अधः क्षिपन्ति कृपणाः, वित्तं तत्र यियासवः । सन्तस्तु गुरुचैत्यादा–वुन्नतं पदमिच्छवः ॥ २२ ॥ इत्येकादशलक्षाणि, व्ययीकृत्य स यात्रया । आगतो मण्डपे दुर्गे, भूभुजा बहुमानितः ॥ २३ ॥ यः श्रीमण्डपदुर्गस्थ–जिनचैत्यशतत्रये । अस्थापयत् स्वर्णकुम्भान्, स्वप्रतापानिवोज्ज्वलान् ॥ २४ ॥ सप्तघ्नद्वादशमितान्, प्रासादान्निरमापयत् । शत्रुञ्जयादिस्थानेषु, यशःपिण्डानिवात्मनः ॥ २५ ॥ श्रीधर्म्मघोषसूरीणां, यः प्रवेशमहोत्सवम् । टङ्ककानां द्विसप्तत्या-सहस्रैर्निरमीमयत् ॥ २६ ॥ गव्यूतद्वितये साधु–योगे सति तदन्तिके । उपक्रमेण गत्वापि, यः प्रतिक्रान्तिमातनोत् ॥ २७ ॥ चतुर्षु योजनेष्वेवं, सति गीतार्थसम्भवे । विधत्ते पाक्षिकं साधु–ष्वहो ! भक्त्यनुरागिता ॥ २८ ॥ पृष्ठस्थरचनावेदि–पुष्पार्पकनरान्वितः । अन्यदा गृहबिम्बाना–मर्चां मन्त्री सृजन्नभूत् ॥ २९ ॥ तावत्तत्रागतो भूपः, प्रच्छन्नं समुपाविशत् । तं पुष्पार्पकमुत्थाप्य, तत्परीक्षाकृतोद्यमः ॥ ३० ॥ हस्तः पराङ्मुखः पुष्प–ग्रहणायाथ मन्त्रिणा । प्रसारितो जिनन्यस्त–दृष्टिना निश्चलात्मना ॥ ३१ ॥ तावज्ज्ञातो नृपस्तेना–ऽन्यान्यपुष्पसमर्पणात् । क यूय-

मिति सम्भ्रान्तो, यावदुत्तिष्ठति द्रुतम् ॥ ३२ ॥ तावत् नृपोऽवदन्मा त्वं, त्वरस्व स्वस्थतां भज । ततः पूजां समाप्यैप, नृपेणालापमातनोत् ॥ ३३ ॥ धन्यस्त्वमीदृशी यस्य, दृढता जिनपूजने । इति स्तुत्वा गतो भूपः, सोऽपि भुक्त्यादिकं व्यधात् ॥ ३४ ॥ अन्यदा स्तम्भनतीर्थे, श्रीधरव्यवहारिणा । सम्यक्त्वशीलव्रतयोः, प्रतिपत्तिर्व्यधीयत ॥ ३५ ॥ सम्यक्त्वोद्यापनेऽप्रैपी–त्प्रतिग्रामं स मोदकान् । मुक्तिवल्ल्याः फलानीव, हेमटङ्ककगर्भितान् ॥ ३६ ॥ तुर्यव्रतोद्यापने तु, तथैव प्रजिघाय सः । पञ्चवर्णदुकूलानां, परिधापनिकाः शुभाः ॥ ३७ ॥ तदा मन्त्रिकृते चैकां, परिधापनिकामसौ । स्वनरैः प्रेपयामास, ते तां लात्वा समागताः ॥ ३८ ॥ तेऽप्यूचुर्मन्त्रिणं देव !, बहिष्पादावधार्यताम् । परिधत्स्वमतो यूयं, श्रीधरप्रहितां मडिं ॥ ३९ ॥ मन्त्रिणा भापिता भार्या, कथं देवि ! विधास्यते । साप्याह तत्समीभूय, स्वामिन् ! सा परिधीयताम् ॥ ४० ॥ ततः श्रीधर्म्मघोपान्ते, द्वात्रिंशद्वार्पिकोऽप्यसौ। चक्रे शीलव्रतोच्चारं, पुत्रस्त्वेकोऽस्ति झञ्झणः ॥४१॥ सहस्रैः पोडशभि–ष्टङ्ककानां विधाप्य च । मडेस्तस्याः प्रवेशं स, स्वयं परिदधौ च ताम् ॥४२॥ इत्यनेकसुकृतैश्चिरमर्ह–च्छासने स्वकमलोल्लसितानि । भानुमानिव विधाय गतोऽस्तं, स क्रमात् शिवपुरेऽपि गमी च ॥ ४३ ॥ मुख्यां यो विमलाचले परिदधौ मालां व्ययित्वा घटी–र्हेम्नः सप्तगुणाष्टकप्रतिमिता राज्ञां वदान्यस्तथा। यः कर्पूरकृते च दक्षिणकरं संयोजयामासिवान्, स श्रीझञ्झणदेस्तदीयतनयः केषां न वर्ण्यः सताम्॥

॥ इति श्रीउपदेशसप्ततिकायां तृतीयेऽधिकारे चतुर्थ उपदेशः ॥ ४ ॥

श्रीसूरयः केऽपि कलौ युगेऽभवन् , दीपा इव श्रीजिनशासनौकसि ।
अत्रोच्यते म्लेच्छपतिप्रबोधकृ—ज्जिनप्रभः सूरिवरो निदर्शनं ॥ १ ॥

[१३३१] दंन्तेविश्वमिते वर्षे, श्रीजिनप्रभसूरयः । अभूवन् भूभृतां मान्याः, प्रासपद्मावतीवराः ॥ १ ॥ अन्यदा ते चतुर्मासीं, स्थिताः श्रीयोगिनीपुरे । श्रीपीरोजसुरत्राणो, राजा यत्र विराजते ॥ २ ॥ पुरान्तस्तेऽन्यदा म्लेच्छा—नुपद्रवविधायिनः । श्रीवामोटनततसज्जी—करणाद्यैरशिक्षयन् ॥३॥ अवदातेन तेनाऽमी, विश्वविस्मयकारिणा। आभूपगोपं सञ्जाताः, जगद्वि-ख्यातकीर्त्तयः ॥४॥ भूपेनाकारितास्ते तं, श्रीधर्म्मोक्तिपुरस्सरम् । प्रत्यहं प्रीणयन्ति स्म, वाक्यैरवसरोचितैः ॥ ५ ॥ पृष्टो विजययन्त्रस्या—ऽऽम्नायस्तेन महीभुजा । स सूरिस्तं जगौ तस्य, तादृशानामगोचरम् ॥ ६ ॥ देवार्यं यत्समीपे स्या—त्तस्या-स्नमपि दैवतम् । न लगेन्न च बाधेत, वैरी रोपारुणोऽपि सन् ॥ ७॥ इत्याकर्णितपूर्वी तद् यन्त्रं निर्म्माप्य भूपतिः । छागस्यै-कस्य कण्ठे च, परिक्षार्थमबन्धयत् ॥ ८ ॥ तरवारिप्रभृत्यस्त्र—प्रहारास्तेन मोचिताः । तदङ्गे न लगन्ति स्म, सन्नाहमिव बिभ्रति ॥९॥ छत्रदण्डे निबध्यैनं, तस्याधः पुनरुन्दरम् । स्थापयित्वा स मार्जारीं, प्रेरयामास कौतुकी॥१०॥ तद्दृष्टिमात्रादु-त्पन्न—वैराद्धावति तं प्रति । तच्छायां किन्तु नायाति, पार्श्वस्थैः प्रेरितापि सा ॥ ११ ॥ इत्यद्भुतद्वयं दृष्ट्वा, यन्त्रे ताम्र-मये पुनः । कारयित्वा तयोरेकं, स्वपार्श्वे स न्यवीविशत् ॥ १२ ॥ एकं च गुरुपादानामुपदीचकृवानयम् । कदाचि-दुपकारं हि, विस्मरन्ति न साधवः ॥ १३ ॥ ततः प्रभृत्यसौ तान् श्री—गुरून् मुञ्चति न क्वचित् । स्थाने याने गृहे

ग्रामे, सभायां विजने वने ॥ १४ ॥ एकदा गुर्ज्जरत्रायां, सुरत्राणो यियासया । ग्रामाद्बहिर्वटस्यैक–स्याऽधः प्रस्थानमादधे ॥ १५ ॥ शीतलं शाड्वलच्छायं, पृथुलं तं पुनः पुनः । निभालयन् सुरत्राणो, गुरून् पप्रच्छ हृद्गतम् ॥ १६ ॥ शोभनोऽयं वटः सूरे !, तन्मनोभाववेदिनः । तेऽप्यूचुर्यदि वो वाञ्छा, तदाऽयं सह चाल्यते ॥ १७ ॥ ओमिति प्रतिपेदाने, चलिते तत्र भूपतौ । वटोऽपि सेवक इवा–ऽचलत्सूरिप्रभावतः ॥ १८ ॥ चलन्तं तं वटं प्रेक्ष्य, लोका उत्फुल्ललोचनाः । सूरीन्द्रं मनुजेन्द्रं च, प्रशंसन्ति पदे पदे ॥ १९ ॥ कियत्यपि व्यतिक्रान्ते, मार्ग्गे भूपोऽभ्यधाद्गुरून् । वटो विसृज्यतामेष, फेरकोऽस्याभवद्बहुः ॥२०॥ इत्युक्ते सूरिभिः प्रोक्तो, वटो नत्वा नृपं व्रज । स्वस्थानकं तथैवाय–मपि चक्रे सुशिष्यवत् ॥ २१ ॥ मरुस्थल्यामथायाते, भूपे तत्रत्य पूर्जनाः । आयान्ति सम्मुखाः स्थाने, स्थाने प्राभृतपाणयः ॥ २२ ॥ सामान्यवेषांस्तान् दृष्ट्वा, भूपः पप्रच्छ तान् गुरून् । किमित्येवं विधा एते, प्रेक्ष्यन्ते लुण्टिता इव ॥ २३ ॥ देशाचाराद्बहुद्रव्यां–ऽभावाच्चैवंविधो जनः । अत्र प्रायो भवेत् स्वामि–न्नान्यत्किञ्चित्तु कारणम् ॥ २४ ॥ ततः प्रतिनरं पञ्च–वर्णीं दिव्यामदापयत् । स्त्रियं प्रति च सौवर्ण्ण–टङ्कयुग्मं च शाटिकाम् ॥ २५ ॥ इत्थमाशां जनस्यैष, पूरयन्नव्द्वत्क्रमात् । प्रासचान् पत्तनासन्ने, जङ्घरालमहापुरे ॥ २६ ॥ पुरा तत्र तपापक्ष–श्रीसोमप्रभसूरयः । सन्ति तन्मिलनार्थं ते, पुरान्तः सूरयो गताः ॥ २७ ॥ अभ्युत्थानासनाद्यैस्तै–स्ते तत्र बहुमानिताः । ऊचुस्तान् यूयमाराध्याः, येषामीदृग्विधा क्रिया ॥ २८ ॥ प्रत्यूचुस्तेऽपि काऽस्माकं, प्रशंसा क्रियते प्रभो ! । धन्या यूयं यदाधारे,

जागर्त्ति जिनशासनम् ॥ २९ ॥ इति प्रीतिपरौ याव—त्तौ वार्त्तां कुरुतो मिथः। तावच्छालान्तरे जातं, कौतुकं यत्त-
दुच्यते ॥ ३० ॥ एकस्य सिक्किका साधो—र्मूषकेन विनाशिता । गुरूणां पुरतोऽभ्येत्य, सरावां विदधे मुनिः ॥३१॥
तदा विद्याभिराकृष्टाः, श्रीजिनप्रभसूरिभिः । शालान्तर्वर्त्तिनः सर्वे, मूषका उपतस्थिरे ॥ ३२ ॥ उन्नमय्य मुखं हस्तौ,
संयोज्य भयभीरवः । गुरूणां पुरतस्तस्थु—र्विनीताः शैक्षका इव ॥ ३३ ॥ श्रृण्वन्तु मूषका भो भो !, यः कश्चिदप-
राधवान् । स तिष्ठतु परे सर्वे, यान्तु स्वेच्छं चरन्तु च ॥ ३४ ॥ इत्याचार्यवचः श्रुत्वा, सर्वेऽपि त्वरितक्रमम् । उत्प्लु-
त्य जग्मुरेकस्तु, स्थितश्चौर इवाग्रतः ॥ ३५ ॥ तमप्युवाच सुरीन्द्रो, मा भैषीर्धीरतां भज । वयं हि साधवः पीडां,
न केषामपि कुर्महे ॥ ३६ ॥ इति प्रोच्य स शालाया, अपि निष्काशितो बहिः । इत्यादिकौतुकैः साधु—वर्गस्तैः
प्रीणितश्चिरम् ॥ ३७ ॥ सूरीणामुपदेशेन, सैन्यसङ्घसमन्वितः । ततो गतः सुरत्राणः, श्रीशत्रुञ्जयपर्वते ॥ ३८ ॥ तत्र
सङ्घपक्त्यानि, भूपाय कृतपूर्विणे । दुग्धेनावर्षयत् सूरि—स्तरुं राजादनीं तदा ॥ ३९ ॥ यात्रां रैवतकेऽप्येवं, विधाय
गुरुभिः समम् । सदुत्सवैः सुरत्राणः, प्रासवान् योगिनीपुरे ॥ ४० ॥ अथैकदा सुरत्राणः, सभासीनः सृजन्नभूत् । श्री-
सूरिभिः समं प्रीति—गोष्ठीमिष्टार्थसाधिकाम् ॥ ४१ ॥ तदा तस्य गुरुः कोऽपि, प्रासस्तत्र स्वविद्यया । शीर्षस्थटोपिकां
व्योम्नि, निरालम्बामतिष्ठिपत् ॥ ४२ ॥ आहत्य लकुटेनेव, स्वरजोहरणेन ताम् । क्ष्मायामपातयत्सूरि—स्तश्च तत्र
न्यवीविशत् ॥ ४३ ॥ आचार्यस्तमुवाचैवं, शक्तिः काप्यस्ति चेत्तव । तदैनं पातय क्ष्माया—मन्यथा मौनमाचर ॥४४॥



तत्पातने क्षमो नाऽभू–च्चिरेणापि स्वयं ततः । गृहीतं गुरुभिः सोऽपि, लज्जितो हसितो जनैः ॥ ४५ ॥ द्वितीयदिवसेऽप्येष, घटं पानीयपूरितम् । गगने स्थापयद्गर्व–मखर्वं च विनिर्ममे ॥ ४६ ॥ घटोऽप्याहत्य तेनैव, खण्डशोऽकारि सूरिणा । परं तत्रैव पानीयं, स्तम्भितं निजविद्यया ॥ ४७ ॥ तच्चमत्कारमालोक्य, न केषां विस्मयोऽभवत् । मुक्त्वैकं तद्गुरुं सर्वे, ततः स्वं स्वं गता गृहम् ॥ ४८ ॥ इत्यादिनानाप्रवरप्रभावना–भरैः सुरत्राणमपि व्यबूबुधत् । स्तोत्राणि यः सप्तशतीमितानि च, ग्रन्थांश्च जग्रन्थ बहूपकारिणः ॥ ४९ ॥ स श्रीजिनप्रभः सूरि–र्दुरिताशेषतामसः । भद्रं करोतु सङ्घाय, शासनस्य प्रभावकः ॥ ५० ॥

॥ इति श्रीउपदेशसप्ततिकायां तृतीयेऽधिकारे पञ्चम उपदेशः ॥ ५ ॥

---

इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिपदकमलसेविमहोपाध्यायश्रीचारित्ररत्नगणितद्विनेयपण्डितसोमधर्म्मगणिविरचितायां उपदेशसप्ततिकायां श्रीगुरुतत्त्वाऽधिकारस्तृतीयः ॥ ३ ॥

---

# ॥ सम्प्रति श्रीधर्मतत्त्वाधिकारश्चतुर्थः प्रारभ्यते ॥

तच्च द्विधा सामान्यविशेषभेदाभ्याम् । तत्र पूर्वं सामान्यधर्म्माधिकारोदाहरणानि—

प्रातः समुत्थाय विहाय शय्या—मुपासकाः श्रीपरमेष्ठिमन्त्रम् ।
स्मरन्तु यस्मात्सकलेष्टयोगाः, श्रीदेववत् प्राग् भवतां भवन्ति ॥ १ ॥

श्रीहर्षो नाम राजाभूत्, पुरे काम्पिल्यनामनि । श्रीदेवस्तस्य पुत्रोऽस्ति, श्रीदेव इव मूर्त्तिमान् ॥ १ ॥ दिग्यात्रायै नृपोऽन्येद्यु—र्जिगीषुः सर्वभूपतीन् । चचाल सैन्यसम्भारै—रचलामपि चालयन् ॥ २ ॥ कामरूपपुरस्वामी, दुर्जेयः किन्तु भूपतिः । चिरं युद्धे तयोर्जाते, नैकस्यापि परं जयः ॥ ३ ॥ देवैर्निवारितो युद्धात्, श्रीहर्षः स्वपुरं ययौ । वैराग्येन सुतं राज्ये, न्यस्य प्राव्रजदात्मना ॥ ४ ॥ श्रीदेवोऽपि पितुर्वैरं, स्मरंस्तं भूपतिं प्रति । मन्त्रिभिर्वार्यमाणोऽपि, विजेतुमचलद्धठात् ॥ ५ ॥ चिरं युध्वाप्यसञ्जात—जयो भग्नपरिच्छदः । नंष्ट्वैकाकी महाटव्यां, प्राप्तः स्वल्पबलो हि सः ॥ ६ ॥ पयः पुलिन्द्रेणैकेन, पायितोऽसौ तृषाकुलः । वने तत्र भ्रमंश्चैकं, पश्यति स्म महामुनिम् ॥ ७ ॥ तदग्रे धर्म्ममादिक्षत्, सोऽपि संयतसत्तमः । विशेषतो नमस्कार—महामन्त्रपदानि च ॥ ८ ॥ यदुक्तम्—

"जो गुणइ लक्खमेगं, पूएइ विहीइ जिणनमुक्कारं। सो तइअभवे सिज्झइ, अहवा सत्तट्ठमे जंमे ॥ १ ॥"

अस्यैकाग्र्याल्लक्षजापे, सति सर्वोत्तमे भवेत्। तीर्थकृत्त्वं मध्यमे तु, पदवी चक्रवर्त्तिनाम् ॥ ९ ॥ सामान्येऽप्यस्य साम्राज्य-लक्ष्मीर्भवति देहिनाम्। अतस्त्वमपि तं मन्त्रं, पठ शाठ्यविवर्जितः ॥ १० ॥ श्रीदेवं पुनरप्याह, स मुनिर्भद्र! पश्यसि। अमुं पुरस्तात् प्रासादं, नमस्कारफलं ह्यदः ॥ ११ ॥

तथाहि प्रथमे कल्पे, देवो हेमप्रभाभिधः। एकदा प्रश्नयामास, कञ्चित्केवलिनं मुनिम् ॥ १२ ॥ भगवन्! बोधिलाभो मे, सम्भवी वा न सम्भवी। कस्यां योनौ च मे जन्म, सर्वमेतन्निवेदय ॥ १३ ॥ केवली प्राह—इतश्च्युत्वा भवान् भावी, वानरोऽत्रैव कानने। धर्म्मप्राप्तिश्च कष्टेन, भाविनी तव हे सुर! ॥ १४ ॥ श्रुत्वेति स्वप्रबोधैक-हेतोस्तेन सुपर्वणा। प्रतिप्रस्तरमुत्कीर्णा, नमस्कारपदावली ॥ १५ ॥ एवं कृत्वा च्युतः काले, स देवो वानरोऽभवत्। पदानि दृष्ट्वा सस्मार, स्वकीयं दैवतं भवम् ॥ १६ ॥ गृहीतानशनस्तत्र, तं मन्त्रं मनसा स्मरन्। बभूव देवस्तत्रैव, विमाने पूर्वनामभृत् ॥ १७ ॥ अग्रतोऽपि स्वबोधार्थं, स देवः प्रीतमानसः। श्रीशान्तेः कारयामास, चैत्यमेतदिहोन्नतम् ॥ १८ ॥ श्रीदेवोऽपि निशम्यैवं, नमस्कारं स्वनामवत्। चकारास्खलितं सम्यक्, पाठं पाठं तदन्तिके ॥ १९ ॥ ततश्च चैत्ये तत्रैव, विधिना जिनदृक्पुरः। नमस्कारमहामन्त्र-लक्षजापं स तेनिवान् ॥ २० ॥ जापे सम्पूर्णतां प्राप्ते, तुष्टो हेमप्रभोऽमरः। अमोघविजयां शक्तिं, तस्मै पुण्यवते ददौ ॥ २१ ॥ काम्पील्ये च पुरे नीतो, राज्ये च स्था-

भाण्डैः प्रपूर्य शकटं, विक्रेतुं लाभवाञ्छया ॥ ३ ॥ गन्त्रीमटाट्यमानां तां, वृषभाभ्यां निरीक्ष्य ते । अवोचन् पर्षदासीनाः, धूर्यमेकं जिहीर्षवः ॥ ४ ॥ चित्रमीक्षध्वमीक्षध्वं, भो भो ग्रामीणमानवाः ! । एकेनानडुहा याति, गन्त्री भाण्डभृतापि हि॥ ५ ॥ एवमेवेति तैः सर्वै–रुच्यमानमिदं वचः । निशम्य कुम्भकारोऽपि, चेतसीदमचिन्तयत् ॥ ६ ॥ एनमेकं हरिष्यन्ति, वृषभं पश्यतोहराः । यतः सन्नप्यसंश्चक्रे–ऽमीभिर्धुर्यो दुराशयैः ॥ ७ ॥ चिन्तयन्नित्यसौ गत्वा, ग्रामान्तर्भाण्डविक्रयम् । यावच्चक्रे व्यग्रचित्त–स्तावत्तैर्वृषभो हृतः ॥ ८ ॥ स्वस्थचित्तः पुनर्गन्तुं, यावद्गन्त्रीमसज्जयत् । तावद्धुर्यमदृष्ट्वैकं, बुम्बारावं चकार सः ॥ ९ ॥ ग्रामीणेषु समस्तेषु, किं किमित्यादिवादिषु । जगदे कुम्भकारेण, वृषभो मे वरो हृतः ॥ १० ॥ अथोचुस्ते कुलाल ! त्वं, मृषा मा ब्रूहि सर्वथा । धुर्येणैकेन ते गन्त्री, ध्यायान्ती ददृशेऽखिलैः ॥ ११ ॥ वृषौ चेद्द्वावभूतां ते, तदाविष्कुरु साक्षिणम् । श्रुत्वेति कुम्भकृद्यं यं, वादयेत्स स एकवाक् ॥ १२ ॥ निराशीभूय सोऽगच्छ–न्मत्सरच्छुरितस्ततः । तद्वार्त्तामपि विस्मार्य, ग्रामीणास्तेऽवसन् सुखम् ॥ १३ ॥ कुम्भकारोऽपि कोपेन, प्रज्वलन्वनवह्निवत् । उत्तेजितः कुटुम्बेन, किमकिञ्चित्करो भवान् ॥ १४ ॥ शिक्षां तेषां न दस्यूनां, दत्से धत्से नृतां वृथा । कृते प्रतिकृतं कुर्या–दित्यपि त्वं न वेत्सि किम् ॥ १५ ॥ ततः स कोपमानाभ्यां, मायया लोभयुक्तया । तदनर्थाय सज्जोऽभूत्, सिंहः प्रक्षरितो यथा ॥ १६ ॥ भवेत्कषाय एकैको–ऽप्यनर्थाय भवस्पृशाम् । चत्वारस्ते पुनर्यत्र, तत्रानर्थे किमुच्यते ॥ १७ ॥ तद्धान्यानि खले पुञ्जी–कृतान्यागत्य निश्यसौ । भस्मीचकार तद्वै-

श्रीवसन्तपुरे राजा, बभूव कनकप्रभः । सर्व्वाधिकारी सर्वेष्टः, सुयशास्तत्पुरोहितः ॥ १ ॥ सूरस्तस्य सुतोत्यन्त–कोपनः कलहप्रियः । योऽग्निवत् प्रज्वलन्नेव, नित्यं तिष्ठति दुष्टधीः ॥ २ ॥ पितरि स्वर्ग्गतेऽन्येद्युः, कोपनत्वेन तत्सुतम् । मुक्त्वा पुरोहितपदे, भूभुजाऽन्यो निवेशितः ॥ ३ ॥ ततः स द्वेषमापन्न–स्तच्छिद्राणि गवेषयन् । नानाव्यथापादनोपायां–स्तत्र भूपे व्यचिन्तयत् ॥ ४ ॥ दोहनावसरेऽन्येद्यु–र्लत्तया तं जघान गौः । तेन मर्म्माहता सा तु, वराकी मूर्च्छिता मृता ॥५॥ आः ! किमेतत्कृतं पाप ! गौरियं मारिता कुतः । इत्यादि यत्तज्जल्पन्ती, हतानेन स्वपत्यपि ॥६॥ जाते कलकले तत्र, प्राप्तैर्नृपभटैरयम् । निबध्योपनृपं नीतः, सोऽपि तं वध्यमादिशत् ॥७॥ नानाविडम्बनापूर्वं, ते नयन्ति पुराद्बहिः । तावत्तत्पुण्ययोगेन, तापसः कोऽप्युपाययौ ॥ ८ ॥ स तानुवाच भो भद्राः !, कोऽयं किमिति मार्यते । ऊचुस्तेऽप्येष पुंरूपो, राक्षसः कोऽपि विद्यते ॥ ९ ॥ कृपया मोचितस्तेन, स तेभ्यः सामयुक्तिभिः । सूरोऽपि तापसीं दीक्षा–मादत्ते स्म तदन्तिके ॥ १० ॥ तप्त्वा तपांसि भूयांसि, तस्यैव नृपतेर्वधे । कृत्वा निदानं स मृतो, जातो वायुकुमारकः ॥ ११ ॥ वसन्तपुरमागत्य, तं भूपप्रमुखं जनम् । रजोभिः स्थगयामास, कटरे ! कोपविप्लवः ॥ १२ ॥ च्युत्वा ततोऽभूच्चण्डालः,प्रथमं नरकं ततः । जगाम कोपकिम्पाक–पादपच्छायमाश्रयन् ॥ १३ ॥ ततो दृग्विषसर्पो–ऽभूद्द्वितीये नरके ततः । ततोऽप्यनन्तसंसारं, भ्रान्तः कोपविडम्बितः ॥१४॥ भूयस्तथ गते काले, श्रीपुरे रत्नभूभृतः । सूरजीवोऽभवद्ग्रासा–ध्यक्षो ब्राह्मणनन्दनः ॥ १५ ॥ तथैव कोपनत्वेन, स नृपेण सहान्यदा । कुर्वाणः कलहं राज–भटैरुल्लम्बितो

वने ॥ १६ ॥ चतुर्ज्ञानधरं तत्र, प्रासं मुनिवरं तदा । आगतो वन्दितुं राजाऽश्रृणोत्तद्देशनामिति ॥ १७ ॥ भो भोः !
भीमभवारण्ये, स्थिताः किं ? नश्यत द्रुतम् । यद्बद्धवैरा धावन्ति, वैरिणो वोऽनुगामिनः ॥ १८ ॥ वैरिणः क इति
क्ष्माप-पृष्टो ज्ञानी पुनर्जगौ । कषायास्तेष्वपि क्रोधो, धत्ते वैरिषु धुर्यताम् ॥ १९ ॥ योऽयमुल्लम्बितो वृक्षे, पुरस्ता-
द्वीक्ष्यते नरः । इदं क्रोधफलं विद्धि, सर्वानर्थनिबन्धनम् ॥ २० ॥ सूरजन्मप्रभृतिकं, तच्चरितं तदाऽखिलम् । श्रुत्वा
ज्ञानिमुनिप्रोक्तं, प्रतिबुद्धा नृपादयः ॥ २१ ॥ केचित्तस्यान्तिके दीक्षां, श्राद्धधर्म्मं च केचन । स्वीकृत्याभिग्रहादींश्च,
स्वस्वकार्याण्यसाधयन् ॥ २२ ॥ सूरजीवोऽपि स क्ष्माप-च्छोटितः शान्ततां भजन् । दीक्षामादाय सञ्जातः, सर्व-
सौख्यैकभाजनम् ॥२३॥ स्त्रीरूपाऽपि क्षमैवैका, क्रोधयोधं जयत्यमुम् । गुणाः परे तु तं जेतुं, पुंरूपा अपि न क्षमाः ॥२४॥
आक्रुष्टोऽपि हतो वापि, न बालैः कलहायते । मुनिः संसारभीरुत्वा-दन्यथा तत्समो भवेत् ॥ २५ ॥ श्रूयते हि पुरा
साधु-मेकमुग्रतपःपरम् । देवता काचिदभ्येत्यो-पास्ते तद्गुणरञ्जितः ॥ २६ ॥ साधो ! सुखेन चारित्रं, तव निर्वहते
सदा । वपुरस्ति निराबाधं, नाप्यन्यः कोऽप्युपद्रवः ॥ २७ ॥ देवो नरो वा यः कश्चि-द्विरूपं कुरुते तव । तदा
वाच्यं ममेत्यादि—वार्त्तां नित्यं चकार सा ॥ २८ ॥ निःस्पृहो मुनिरप्याह, न मे किञ्चन दुष्करम् । यतः सन्तो-
षिणः सौख्यं, यत्तच्चक्रभृतोऽपि नो ॥ २९ ॥ पारणाहेऽन्यदा गच्छ-न्नगरान्तः स संयतः । अमङ्गलधियाभ्यास-
द्विजेनैकेन कुट्टितः ॥ ३० ॥ मुनिरप्युच्छलन्मन्यु-र्मुष्टिभिस्तमताडयत् । मुष्टामुष्टि तयोरेवं, चिरं युद्धमजायत ॥३१॥

भोजनानन्तरे देवी, पप्रच्छ कुशलादिकम् । रुष्टः सोऽप्याह तत्र त्वं, नागता किं त्वयाऽधुना ? ॥ ३२ ॥ मुने ! तत्राहमायाता, परं त्वं नोपलक्षितः । उभयोर्युद्ध्यमानत्वात्त–दानीं समता ह्यभूत् ॥३३॥ क्षमातपोभ्यां युक्तत्वात्, क्षमाश्रमण उच्यते । तयोरेकतरस्यापि, नाशे नाम्नो निरर्थता ॥ ३४ ॥ इत्थं तया साधुरयं प्रबोधितो, बभूव चारित्रिजनावतंसकः । तत्क्रोधयोधो विजिगीषुभिर्भवं, जेतव्य एवोच्चपदस्पृहा यदि ॥ ३५ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे तृतीय उपेदशः ॥ ३ ॥

---

मानोऽपि मान्योऽस्तु मनस्विनां कथं, विडम्बयन्नष्टविधाभिरङ्गिनः ।
यं प्राप्य स क्ष्मापतिपुत्र उज्झिता–भिधोऽपि जज्ञे निजजीवितोज्झितः ॥ १ ॥
अष्टविधमदफलं चेदम्—

रज्जाभोगे तिसिआ, अट्ठवसट्टा पडंति तिरिएसु । जाईमएण मत्ता, किमिजाई चेव पावंति ॥ १ ॥ कुलमत्त सीआलत्ते, उट्टाईजोणि जंति रूवमए । बलमत्तावि पयंगा, बुद्धिमए बुक्कडा हुंति ॥ २ ॥ रिद्धिमए साणाई, सोहग्गमएण सप्पकागाई । लाभमएण बइल्ला, हवंति इअ अट्ठमयदुट्ठा ॥ ३ ॥ इति श्रीमहापुरुषचरित्रे ॥

राजा नन्दिपुरे रत्न–सारो नीतिलतावनम् । सिञ्चन्नम्बुदवत्सर्व–तापनिर्वापकोऽभवत् ॥ १ ॥ तस्य प्रेमलता राज्ञी,

साक्षात्प्रेमलतेव या। कोऽपि जीवोऽन्यदा तस्याः, गर्भे समुदपद्यत ॥२॥ अशुभा दोहदास्तस्याः, जातास्तदनुभावतः।
नृपव्यापादनस्तैन्य–वञ्चनोल्लुम्बनादयः ॥ ३ ॥ जातमात्रोऽपि बालोऽसौ, प्रच्छन्नं त्याजितस्तया । बहिर्वलिष्ठायु-
ष्कत्वा–द्वराको न मृतः परम् ॥ ४ ॥ एकेन वणिजा दृष्टो, गृहीतश्च दयालुना । अर्पितो निजभार्यायै, पालयामास
सापि तम् ॥ ५ ॥ कृतोज्झिताभिधः पित्रा, लब्ध उज्झित इत्ययम् । मनोरथेन महता, जातः पञ्चपवार्षिकः ॥६॥
अहमेव पटुः प्राज्ञो, धनवान् वलवानपि । केऽमी वराका मनुजाः, मत्पुरः किङ्करा इव ॥ ७ ॥ इत्यहङ्कारपूरेण, तृणी-
कृतजगत्त्रयः । दिवसानतिचक्राम, स शैलस्तम्भसन्निभः ॥ ८ ॥ मातृपित्रोर्देवगुर्वो–र्न प्रणाममसौ व्यधात् । नित्य-
मुत्तान एवास्ते, दुर्विनीतशिरोमणिः ॥ ९ ॥ तमाह जनकोऽन्येद्यु–र्वत्स ! विद्यामठं व्रज । पठ ग्रन्थान्मुञ्च शाठ्यं,
विनयं कुरु पाठके ॥ १० ॥ अलं मे गलशोषेण, प्राज्ञः प्रागप्यहं यतः । वराकः स उपाध्यायः, किं मे कर्त्ताऽधिकं
वद ॥११॥ वणिजामयमाचारः, इत्यादि वहुचाटुभिः । प्रेषितो लेखशालायां, मातृकादि पपाठ च ॥१२॥ अपराधे क्वचि-
च्चैष, कलाचार्येण ताडितः । तावत्तमाह रे भिक्षा–चर ! त्वं मां न वेत्सि किम् ? ॥१३॥ पाठनेन तवानेन, किमित्यादि वदन्न-
यम् । रोषेण सहसोत्थाय, तं जघान चपेटया ॥ १४ ॥ धृत्वा केशेषु दुष्टात्मा, तमुच्चासनसंस्थितम् । पातयामास भूमौ स,
किमकृत्यं न पापिनाम् ॥१५॥ ज्ञाते व्यतिकरे तत्र, स आहूतः क्षमाभुजा । भाषितः किमरे मूर्ख !, पण्डितः कुट्टितस्त्वया
॥१६॥ सभ्रूक्षेपं साभिमानं भूपं स प्राह दुर्मतिः । स मनाक् शिक्षितो भिक्षा–चरस्तत्किन्तु दूषणम् ॥ १७ ॥ अन्योऽपि यदि

कश्चिन्मां,धिक्कर्त्ता तादृशं फलम्। स प्राप्स्यतीति सोल्लुण्ठ–मुवाच गतभीतिवत्॥१८॥ क्रुद्धेन क्ष्माभुजा धृत्वा, गलेऽसौ कर्षितः पुरात्। बालहत्याभिया किन्तु, वराको नहि मारितः॥१९॥ इह लोकेऽप्यहङ्कार–फलमालोक्यतां बुधाः!। वियोगः स्वजनैर्भूपा–ऽपमानो वनवासिता ॥ २० ॥ यथा चक्री मनुष्येषु, त्रिदशेषु पुरन्दरः। तथा गुणेषु सर्वेषु, धौरेयो विनयः स्मृतः ॥ २१ ॥ अथोज्झितकुमारोऽपि, पर्यटन्विकटाटवीः । तापसाश्रममायात–स्तपोधनसमाकुलम् ॥ २२ ॥ असौ पर्यस्तिकां बध्वा, तेषामग्रे निविष्टवान् । ननाम न शठस्तैर–प्युक्तं मैवमुपाविश ॥ २३ ॥ ततो रुष्टः परित्यज्य, तदाश्रममविश्रमम् । अरण्यानीं भ्रमन्नेष, सिंहमेकं व्यलोकत ॥ २४ ॥ पुच्छमुच्छाल्य सिंहोऽपि, क्ष्वेडाडम्बरभीषणः। तमभ्यधावत क्रुद्धः, सोऽपि मानी व्यचिन्तयत्॥ २५ ॥ आः! क एष पशुः किं वा, नश्यतेऽस्माद्वराकतः। लोका अपि हसिष्यन्ति, मां पशोरपि बिभ्यतम् ॥ २६ ॥ इत्यहङ्कारतस्तस्मा–दनश्यंस्तेन मारितः। शास्त्रेऽपि श्रूयते ह्येवं, मणुआण अहियरो ॥ २७ ॥ स जातो गर्दभस्तस्मात्, करभस्तुरगस्ततः। तत्रैव नगरे भूयः, पुरोहितसुतोऽभवत् ॥ २८ ॥ भूत्वापि सर्वविद्यानां, पारगः स मृतस्ततः । तत्रैव नगरे जातो, डुम्बोऽहङ्कारदोषतः ॥ २९ ॥ यथा यथा पुरोधास्तं, पश्यत्यस्य तथा तथा। स्नेहः स्याद् दुस्त्यजे येन, स्नेहवैरे पुरातने ॥ ३० ॥ अन्येद्युस्तत्पुरप्राप्त–केवलज्ञानिनोऽन्तिके। पुरोहितस्तत्स्नेहस्य, हेतुं पप्रच्छ सोऽप्यवक् ॥ ३१ ॥ मूलादारभ्य तद्वृत्त–महङ्कारविपाकजम्। मानेन के न पीड्यन्ते, प्राणिनः पण्डिता अपि ॥ ३२ ॥ श्रुत्वा पुरोहितस्तेन, ज्ञानिना गदितं

वचः । भवाद्विरक्तः प्रव्रज्य, तदन्ते प्राप निर्वृतिम् ॥ ३३ ॥ उज्झितोऽपि सुगतिं गतवान् श्री–धर्म्ममार्हतमवाप्य गुरुभ्यः । तेन मानव ! न मानविपक्षो, मान्य एप भवता भवबीजम् ॥ ३४ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे चतुर्थ उपदेशः ॥ ४ ॥

---

मायापिशाचीविवशा नरा ये, स्वार्थैकनिष्ठाः परवञ्चनानि ।
सृजन्ति तेऽधोगतयो भवन्ति, निदर्शनं त्वत्र स पापबुद्धिः ॥ १ ॥

पुरे श्रीतिलके द्रव्यो–पार्ज्जनैकपरायणौ । धर्म्मबुद्धिः पापबुद्धि–रभूतां वणिजावुभौ ॥ १ ॥ ऋजुस्वभावस्तत्राद्यः, सर्वेषां हितचिन्तकः । द्वितीयः कपटी मायी, विश्वस्तस्याऽपि वञ्चकः ॥ २ ॥ तयोरप्यभवन्मैत्री, वाणिज्यं तन्वतो-र्मिथः । लोको वदत्ययं योगः, काष्टक्रकचसन्निभः ॥ ३ ॥ तथापि धर्म्मबुद्धिस्तं, न त्यजत्युत्तमत्वतः । अशोभाकृदपि त्याज्यः, कलङ्कः शशिना किमु ॥ ४ ॥ अन्यदा व्यवसायार्थं, तौ गतौ क्वापि पत्तने । वणिजां क्षीणवित्तानां, व्यव-सायो हि कामधुक् ॥ ५ ॥ पृथग्पृथगुपार्ज्यैतौ, दीनाराणां सहस्रकम् । प्राग्वद्वक्रेतरस्वान्तौ, वलितौ स्वपुरं प्रति ॥६॥ आसन्ने स्वपुरे प्राप्ते, शठोऽशठमभाषत । एतावदखिलं वित्तं, पुरान्तर्गृह्यते कुतः ॥ ७ ॥ कियन्निधीयतेऽत्रैवा–ऽवसरे लास्यते पुनः । राजदायाददस्युभ्यो, भयं वित्तस्य नैकधा ॥ ८ ॥ श्रुत्वेति सरलस्वान्तो, वित्तं पञ्चशतीमितम् ।

न्यास्थत्तत्रैव तच्चेतः–प्रत्ययाय परोऽपि च ॥ ९ ॥ आगतौ स्वगृहे वर्द्धा–पनकं च तयोरभूत्। कियद्दिनान्तरे वित्तं, तद्भूस्थं पापधीरलात् ॥ १० ॥ अथावसरमासाद्य, पापबुद्धिस्तमब्रवीत्। आगच्छ मित्र ! तद्वित्तं, यथा सम्प्रति गृह्यते ॥ ११ ॥ स्थानद्वयं तदालोक्य, रिक्तं प्राह स पापधीः। आः केनापि हृतं वित्त–मावयोर्जीवितोपमम् ॥ १२ ॥ तं धिगस्तु स पापात्मा, म्रियतां किं करिष्यते। विलापान्कृत्रिमानेवं, स सत्यानिव निर्म्ममे ॥ १३ ॥ अथाऽब्रवीत्स पापात्मा, धार्म्मिकं धर्म्मबुद्धिकम्। रे धर्म्मधूर्त्त ! रे दुष्ट !, तवैवैतद्विजृम्भितम् ॥ १४ ॥ धर्म्मबुद्धिरपि प्राह, भ्रातः ! किमिदमुच्यते। नेदृशं मादृशं कर्म्म, किन्तु कस्यापि पापिनः ॥ १५ ॥ जातो विवाद उभयो–र्गतौ राजकुले च तौ। पापबुद्धिस्तदा प्राह, चौरोऽयं धर्म्मबुद्धिकः ॥ १६ ॥ प्राहुर्नियोगिनः साक्षी, युवयोः कोऽपि विद्यते। पापबुद्धिरभाषिष्ट, साक्षिणो वननाकिनः ॥ १७ ॥ शुद्धबुद्धिर्धर्म्मबुद्धि–स्तदा चेतस्यचिन्तयत्। अहो ! धृष्टत्वमेतस्य, अहो ! कपटपाटवम् ॥ १८ ॥ मम श्रीधर्म्म एवात्र, सखाऽन्यैः किं सहायकैः। प्रातः परीक्षा कर्त्तव्ये–त्यादि भूपादयोऽब्रुवन् ॥ १९ ॥ पापबुद्धिस्ततः प्राह, रात्रौ स्वजनकं प्रति। प्रारब्धोऽयं मया कूट–कलहो निखिलोऽपि हि ॥ २० ॥ कथं कर्त्तासि तातेने–त्युक्तः स प्राह दुष्टधीः। त्वं तात ! विपिने गत्वा, प्रविश क्वापि कोटरे ॥ २१ ॥ राजादीनां पृच्छतां च, त्वया वाच्यमिति प्रगे। निष्कलङ्कः पापबुद्धि–र्धर्म्मबुद्धिस्तु तस्करः ॥ २२ ॥ तेनेति शिक्षितस्तात–स्तथैव निखिलं न्यधात्। प्रत्यूपे मिलिते लोके, स ऊचे च तथैव तत् ॥ २३ ॥ इतस्ततो विलोकन्ते,

सर्वेऽपि साश्चर्या—स्तूर्णमुत्कर्णतां दधुः ॥ २४ ॥ सहसोत्पन्नबुद्धिस्तु, धर्म्मबुद्धिस्त-
न च पश्यन्ति कञ्चन । लोकाः सर्वेऽपि साश्चर्या—स्तूर्णमुत्कर्णतां दधुः ॥ २४ ॥ सहसोत्पन्नबुद्धिस्तु, धर्म्मबुद्धिस्त-
दाऽवदत् । राजानं प्रति देवेदं, कोटरं ज्वालयिष्यते ॥ २५ ॥ देवो वा मानवो वापि, यथा प्रत्यक्षतां व्रजेत् । इत्यु-
क्त्वा सहसोत्थाय, यावत्तज्ज्वालयत्यसौ ॥ २६ ॥ तावत्स जनकस्तस्मा—त्कोटरान्निर्गतः क्षणात् । कर्म्मणा प्रेरितो
जीवो, जनन्या उदरादिव ॥ २७ ॥ तदानीं तं नृपोऽपृच्छ—दरे ! किमिदमद्भुतम् । सोऽपि वृत्तान्तमाचख्यौ, दुःसु-
तप्रेरणादिकम् ॥ २८ ॥ तं तत्सुतं च ते लोकाः, धिक्कुर्वन्तीति रे ! युवाम् । अकृशाथामिदं किं य—न्मित्रेऽपि द्रोह-
कारिता ॥ २९ ॥ पापबुद्धिस्ततो राज्ञा, मार्यमाणोऽपि वारितः । लगित्वा पादयोर्धर्म्म—बुद्धिना शुद्धबुद्धिना ॥३०॥
धर्म्मबुद्धेस्तदा श्लाघां, निन्दां पापमतेस्तथा । भूपाद्याश्चक्रिरे माया, कटरेऽत्रैव दुःखदा ॥ ३१ ॥ एवं वभूवाऽशठ-
वक्रभावयुग्, तन्मित्रयुग्मं सुखदुःखभाजनम् । मायां भुजङ्गीमिव दूरतस्ततो—ऽवदातचित्तास्त्यजत द्रुतं जनाः ! ॥३२॥
॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे पञ्चम उपदेशः ॥ ५ ॥

---

यो द्वादशं यावदुपागतो गुण—स्थानं निषेधं स्थिरसंविदः सृजेत् ।
इहाप्यमुत्रापि विडम्बयेन्नकं, स लोभवैरी किल सागरं यथा ॥ १ ॥
सागरः सादरो द्रव्यो—पार्ज्जने धर्म्मवर्जितः । अभूच्छ्रीमन्दिरे श्रेष्ठी, द्रव्यकोट्यष्टकप्रभुः ॥ १ ॥ परं कदर्यमूर्द्धन्यो,

न भुंक्ते न ददाति च । कपाटपिहितं प्रायो, द्वारं तस्य सदा भवेत् ॥ २ ॥ गृह एव स्थितस्यास्य, दृष्टौ कोऽपि क-
रोति न । भोजनस्नानदानादि, याचकः कोऽपि नैति च ॥ ३ ॥ कमला गृहिणी तस्य, देविलस्तनयस्तयोः । विम-
ला तत्प्रिया सर्वे-ऽप्येते तच्चकिताः सदा ॥ ४ ॥ तत्र श्वश्रू वधूद्वौ ते, मन्त्रतन्त्रविशारदे । अनेकाभिः कुविद्याभिः,
स्वैराचारे बभूवतुः ॥ ५ ॥ योगिन्येकाऽन्यदा तस्य, विजने गृहमागता । श्वश्रूवधूभ्यां सा पृष्टा, सादरं नतिपूर्वकम्
॥ ६ ॥ स्वामिन्यत्र गृहे दत्त-द्वारे त्वं कथमागता । साप्याह मम विद्यास्ति, साधारा व्योमगामिनी ॥ ७ ॥ ताभ्यां
तस्याश्च सा विद्या, गृहीता बहुमानतः । एकं च शुषिरं दारुं, विद्यते तद्गृहे महत् ॥ ८ ॥ तस्मिन्नारुह्य तद्दत्त-म-
न्त्रशक्त्या च ते उभे । निशीथसमये यातः, क्रीडार्थं स्वेप्सिते पदे ॥ ९ ॥ एकदा कायचिन्तार्थं, निशीथे पुत्र उत्थि-
तः । सुप्ताशेषजनेऽद्राक्षी-त्कौतुकं रहसि स्थितः ॥ १० ॥ श्वश्रूवध्वौ तदोत्थाय, सौत्सुक्यं निभृतक्रमम् ।
त्वर्यतां त्वर्यतामेव-मूचतुश्च मिथो मुदा ॥ ११ ॥ सोऽप्यभूद्यावदुत्कर्णः, श्वश्रूतावदुवाच ताम् । अरे काष्ठमिदं शीघ्रं,
सज्जीकुरु पुरो भव ॥ १२ ॥ आत्मनास्ति गन्तव्यं, दूरे तन्माविलम्बय । इत्युक्त्वा ते उभे तत्रा-रूढे तन्मन्त्रपू-
र्वकम् ॥ १३ ॥ तत उत्पतिते व्योम्नि, व्यन्तर्याविव ते उभे । इत्याश्चर्यं तदालोक्या-ऽचिन्तयद्देवलस्तदा ॥ १४ ॥
अहो ! किमेते शाकिन्यौ, पापिन्यौ पतिवञ्चिके । गते कुत्र कदा पश्चा-देते चात्रागमिष्यतः ॥ १५ ॥ इत्यसौ
जाग्रदेवास्थात् , तत्र ते यावदागते । ततः क्षणान्तरे जातः, प्रातःकालो विकस्वरः ॥ १६ ॥ स तयोस्तादृशं वृत्तं, न

कस्यापि न्यवेदयत् । परेषां दूषणानीव, प्रायश्चित्तप्रदो गुरुः ॥ १७ ॥ स कौतुकी द्वितीये तु, दिने जाते तमोभरे । प्रागेव शुषिरे तत्र, प्रौढे काष्ठे प्रविष्टवान् ॥ १८ ॥ तथैवारुह्य ते तत्र, जग्मतुः स्वेप्सितं पदम् । प्रवृत्ते क्रीडितुं मुक्त्वा, तत्काष्ठं क्वापि भूतले ॥ १९ ॥ अन्या अपि स्त्रियः सन्ति, मिलितास्तत्र भूरिशः । चिरं क्रीडारसस्ताभि-श्चक्रे तत्राऽविशङ्कितम् ॥ २० ॥ तत्कोटराद्विनिर्गत्य, कुमारोऽपि भ्रमन् क्वचित् । स्वर्णेष्टिकाभिराकीर्ण-मिष्टिकापाकमैक्षत ॥ २१ ॥ उत्फुल्लनयनश्चेत-स्यचिन्तयदयं तदा । स्वर्णद्वीपो ह्ययं नूनं, श्रूयते यो जनोक्तिभिः ॥ २२ ॥ यः प्राप्य क्लेशकोटीभि-र्निःस्वैः स्वप्नेऽपि नेक्ष्यते । अयत्नेनापि सम्प्राप्तो, मया भाग्यं महन्मम ॥२३॥ द्वित्राः स इष्टिकाः साराः, सन्तोषी जगृहे ततः ।मनस्वी नहि लोभी स्यात् , सति लाभेऽपि भूयसि ॥ २४ ॥ तथैव कोटरे तत्र, स संलीनवपुः स्थितः । स्वाङ्गोपाङ्गानि सङ्कोच्य, प्रावृषीव महामुनिः ॥ २५ ॥ क्रीडित्वा सुचिरं ते अ-प्यागते तत्र निर्भये । तथैवोत्पतिते व्योम्नि, क्रमाच्च गृहमागते ॥ २६ ॥ प्रातःकाले कुमारस्त-द्वृत्तज्ञापनपूर्वकम् । स्वपित्रे दर्शयत्स्वर्णं, विस्मितः सोऽपि तं जगौ ॥२७॥ अरे मूर्ख ! त्वया स्तोक-मिदमात्तं कथं हहा !। यत्नं विनापि हस्तासं, धनं को नाम मुञ्चति ॥२८॥ अद्याहं तत्र यास्यामि, तल्लास्यामि यथेप्सितम् । दारिद्र्यं द्रावयिष्यामि, निश्चिन्ता हि भवादृशाः ॥ २९ ॥ इत्युक्त्वोत्थितवान् श्रेष्ठी, लोभक्षोभवशंवदः । तद्ध्यानलीनस्तदह-न्यभूत्तन्दुलमत्स्यवत् ॥ ३० ॥ निशीथिन्यां तथैवैष, तत्काष्ठान्तः प्रविष्टवान् । प्रस्थितः सह ताभ्यां च, तं प्रदेशमुपागमत् ॥ ३१ ॥ ततो निर्गत्य पुत्रोक्ता-भिज्ञानादि स्मरन् हृदि ।

इष्टिकापाकमद्राक्षीत्, प्रत्यक्षमिव रैगिरिम् ॥ ३२ ॥ हृष्टस्तद्दर्शनाच्छ्रेष्ठी, ह्यसन्तुष्टः स इष्टिकाः । गृहीत्वा तत्तथा वभ्रे, कष्टेनामात्स्वयं यथा ॥ ३३ ॥ तथैव श्वश्रूवध्वौ ते, चलिते स्वपुरीमभिः । उदन्वदुपरि प्राप्ते, यावत्तावद्वधूरवक् ॥ ३४ ॥ केनापि हेतुना मातः !, काष्ठमद्य महाभरम् । न चलत्यग्रतः शीघ्रं, श्वश्रूरप्याह तां प्रति ॥ ३५ ॥ अरे ! त्यजैतदत्रैव, यच्चैतत् प्रेक्ष्यते तरत् । गृहाण काष्ठं तद्यावो, यथा शीघ्रं पुरे निजे ॥ ३६ ॥ अथ भीतोऽवदच्छ्रेष्ठी, मा मां क्षिपतमम्बुधौ । उपलक्ष्य तमन्योऽन्यं, ते ब्रूतस्त्वं क रे इह ?॥ ३७॥ सुतरां कूपिते तस्मा–द्विगोपनभयादिमे । सकाष्ठं तं परित्यज्य, तत्र ते गृहमागते ॥ ३८ ॥ अन्यत्राप्युक्तम्—

अतिलोभो न कर्त्तव्यो, लोभं नैव परित्यजेत् । अतिलोभाभिभूतात्मा, सागरः सागरेऽपतत् ॥ १ ॥

क्रमेण ज्ञातवृत्तान्तो, भीतस्ताभ्यां सुतोऽपि सः । परिव्रज्यामुपादाय, जातः सुखनिकेतनम् ॥ ३९ ॥ लोभस्याप्येवमाकर्ण्य, विपाकं विबुधा जनाः । सन्तोषामृतपूरेणाऽऽत्मानं सिञ्चत सर्वदा ॥ ४० ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे षष्ठ उपदेशः ॥ ६ ॥

---

श्रीधर्म्मतत्त्वं गुणिनां नृणां पुरः, प्रोक्तं प्रदत्तं च हितावहं द्वयोः ।
तदुज्झितानां पुनरेतदुक्तयो, वृथाऽऽमकुम्भस्थपयोभरा यथा ॥ १ ॥

एकलज्जागुणेनापि, यद्यशो बहुमानितः । ये तु भूरिगुणैर्लोक–प्रियास्तेषां किमुच्यते ? ॥ २ ॥

अस्ति पृथ्वीपुरं तत्र, राजा श्रीरिपुमर्द्दनः । अर्थिप्रत्यर्थिनो येन, दानमेव वितीर्यते ॥ १ ॥ तस्यास्ति श्रीमुखी नाम,
वडवा लक्षणान्विता । यस्याः किशोरकाः प्रायो, जायन्ते जात्यघोटकाः ॥ २ ॥ गर्भं बभार साऽन्येद्यु–
रश्वं विश्वगुणान्वितम् । अदभ्रमभ्रमालेव, स्वाङ्के पङ्कजबान्धवम् ॥ ३ ॥ सगर्भां तां च स क्ष्मापो–ऽन्यदाऽध्यारुह्य
वेगतः । अश्ववाहनिकाहेतो–र्जगाम नगराद्बहिः ॥ ४ ॥ अहंपूर्विकया तत्रा–ऽश्ववारैरपरैरपि । अश्वेषु प्रेर्यमाणेषु,
कृतकोलाहले जने ॥ ५ ॥ भारपीडितगात्रत्वात्, गतिं मन्दां वितन्वतीम् । जघान कशया सद्य–स्तामपि स्पर्द्धया
नृपः ॥ ६ ॥ कालक्रमेण सुषुवे, साऽश्वरत्नमनुत्तरम् । समग्रगुणयोगेऽपि, काणं दक्षिणचक्षुषा ॥ ७ ॥ वास्तव्याऽऽगा-
मुका लोका–स्तं किशोरकुमारकम् । दर्शं दर्शं प्रशंसन्ति, जात्योऽयं भविता हयः ॥ ८ ॥ परमस्यापि दैवेन, कृतं
काणत्वदूषणम् । रत्नदोषी विधिरहो !, यदन्यत्रापि पठ्यते ॥ ९ ॥

शशिनि खलु कलङ्कः कण्टकाः पद्मनाले,

एवं लोककृताः श्रुत्वा, स प्रशंसास्तुरङ्गमः । आगत्य मातुरभ्यर्णं, निजगाद सगद्गदम् ॥ १० ॥ मातः ! कथय मे
जातं, कथं काणत्वदूषणम् ?। निर्बन्धे सति साप्याह, तत्स्वरूपं स्वभाषया ॥ ११ ॥ यदा त्वं वत्स ! गर्भेऽभू–स्तदा-
मह्यमसौ नृपः । कशाघातं ददौ स त्व–च्चक्षुःस्थाने समागतः ॥ १२ ॥ तेन त्वमक्ष्णा काणोऽभू–र्नान्यथा भवित-

न्यता । इति श्रुत्वा स तेजस्वी, भृशं रोषारुणो जगौ ॥ १३ ॥ मातः ! कोऽयं नृपपशु–र्यस्त्वामप्यपराध्यति । सुप्तः प्रबोधितः सिंह–स्तदनेन मुमूर्षुणा ॥ १४ ॥ न चेद्व्यापादयाम्येन–मचिरेण तदा तव । न भवामि सुतो मातः !, सस्नेहं साऽप्युवाच तम् ॥ १५ ॥ मा वादीरिति येनायं, राजा विश्वोदरंभरिः । आवां पशू अयं त्वात्म–स्वामी निर्वाहकारकः ॥ १६ ॥ मम जातेन केनापि, स्वामिद्रोहो न निर्मितः । कोहमसत्त्वं कुविज्ञा, शास्त्रेऽप्येवं यदुच्यते ॥१७॥ तदुक्तिमित्याकर्ण्यैष, भस्मच्छन्नाग्निवन्मनाक् । अभूच्छान्तो नहि क्रोधो, धीराणामुपशाम्यति ॥ १८ ॥ श्रुतो व्यतिकरश्चाय–मासन्नस्थेन भूभुजा । तिर्यग्भाषापरिज्ञाने, देवादेशोऽस्ति तस्य यत् ॥ १९ ॥ मम नूनमसौ शत्रु–र्विषमे क्वापि मामयम् । हनिष्यतीति नात्राहं, चरिष्यामि कदाचन ॥ २० ॥ विमृश्येति कियत्कालं, सुखेन व्यत्यलङ्घयत् । भूपः किशोरकोऽप्येष, जातो जात्यतुरङ्गमः ॥ २१ ॥ अन्यदा जलपानार्थं, नीते निखिलसाधने । स एवाश्वोऽभवद्गेहे, तदा बुम्बारवोऽभवत् ॥२२॥ भो भोः सुभटकोटीराः !, द्रुतं धावत धावत । जगृहे गोधनं सर्वं, परिपन्थिभिरुद्धतैः ॥ २३ ॥ तदा च व्याकुलत्वेन, स एवाऽश्वः क्षमाभुजा । अधिकारिनरैः सज्जः, कारितो वाहराकृते ॥ २४ ॥ गच्छन्नश्वोऽब्रवीत् स्वाम्बां, पश्य मातः ! पुरातनम् । वैरं निर्वालयाम्यद्य, सापि सप्रश्रयं जगौ ॥ २५ ॥ वत्स ! गच्छ सुखं तेऽस्तु, जातिस्ते वारयिष्यति । प्रकृताविह जातानां, विकृतिर्नोपजायते ॥ २६ ॥ क्षणात्पर्याणयांचक्रे, भूपस्तं सपरिच्छदः । बहिश्च जग्मिवान्यत्र, विद्यन्ते ते रिपुव्रजाः ॥ २७ ॥ भूपेन हक्किता योद्धुं, संमुखास्ते डुढौ-

किरे । एषोऽपि तैः समं युद्ध–क्रीडाकौतुकमन्वभूत् ॥ २८ ॥ अथाश्वश्चिन्तयामास, दुष्टमेनं नृपाधमम् । मारयामि विपक्षेभ्यो, तत्सैन्ये वा नयाम्यहम् ॥ २९ ॥ पातयित्वाऽथवा भूमौ, मथ्नामि चरणैर्निजैः । कुलीनत्वात्पुनर्दध्यौ, हा ! धिग् मे दुष्टचेष्टितम् ॥ ३० ॥ अयं हि पृथिवीपालः, पशोरपि पशुस्त्वहम् । ईदृक्षेऽवसरेऽनर्थे, यदसौ पात्यते मया ॥ ३१ ॥ स्वकार्यकरणे भूयो, भाविनोऽवसरा मम । भूयांसोऽपीति निध्याय, युद्धाय प्रगुणोऽभवत् ॥ ३२ ॥ तत्सान्निध्यात्ततो भूप–स्तं विजित्य रिपुव्रजम् । गृहीत्वा गोधनं प्रासः, स्वपुरे निर्मितोत्सवैः ॥ ३३ ॥ अस्यैवाश्वस्य साहाय्या–न्निर्जिता रिपवो मया । ततोऽयमेव पट्टाश्वो, भवतादपरैरलम् ॥ ३४ ॥ सौवर्णाभरणश्रेणीं, भूपस्तं पर्यधापयत् । तत्याज कुमतिं सोऽपि, तादृशादरवीक्षणात् ॥ ३५ ॥ एवं स काणोऽपि तुरङ्गमो यथा, बभूव मान्यो विनयादिभिर्गुणैः । संगृह्यतां भो भविकास्ततो गुण—श्रेणिर्भवद्भिः कृपणैर्यथा धनम् ॥ ३६ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे सप्तम उपदेशः ॥ ७ ॥

---

गुणान् गुणवतां प्रेक्ष्य, मत्सरस्तेषु नोचितः । कर्त्तुं विवेकिनामत्र, ब्राह्मणानां निदर्शनम् ॥ १ ॥

कुमारप्रमुखाऽनेक–भूपालप्रतिबोधकाः । चिरं प्रभावितश्रीमज्जिनेन्द्रवरशासनाः ॥ १ ॥ नवीननिर्म्मिताऽनेक–ग्रन्थाः श्रीहेमसूरयः । अभूवन्कीर्त्तिकर्पूर–सुरभीकृतभूतलाः ॥ २ ॥ चतुर्युताऽशीतिमितं, स्वायुः सम्पूर्य तेऽन्यदा ।

दिवं गता महान्तोऽपि, दैवेन ग्रसिता न के ? ॥ ३ ॥ तादृक्पुरुषरत्नस्य, विनाशेन तदाऽभवत् । नृपादीनां महान् शोको, मनःसन्तापकारकः ॥ ४ ॥ सृजति तावदशेषगुणालयं, पुरुषरत्नमलङ्करणं भुवः । तदपि तत् क्षणभङ्गि करोति चे–दहह ! कष्टमपण्डितता विधेः ॥ ५ ॥ विमानोपमितं तेषां, झम्पानं निर्गतं ततः । कृत्वा नगरविश्रामं, पुनरुत्पाटितं च तत् ॥ ६ ॥ तीर्थभूता च तत्स्थान–धूलिः पत्तनवासिभिः । तथा कथञ्चिज्जगृहे, तत्र गर्त्ता यथाऽभवत् ॥ ७ ॥ हेमखड्ड इति ख्याति–स्ततोऽभूदखिले जने । प्रत्यनीकैर्द्विजैस्तच्च, स्थाप्यते पुनरन्यथा ॥ ८ ॥ हेमचन्द्रगुरुः क्षिप्तो, गर्त्तायां तत उच्यते । हेमखड्डेति ते मूर्खाः, स्थापयन्ति द्विजाधमाः ॥ ९ ॥ यत्तत्प्रलापिनां तेषा–मेवं युक्तिविशारदैः । प्रत्युत्तरं प्रदातव्यं, भो भूदेवाः ! निशम्यताम् ॥ १० ॥ यदा श्रीहेमसूरीणां, मरणं समजायत । सर्वे विप्रास्तदा हर्ष–प्रकर्षं दधिरे हृदि ॥ ११ ॥ यथादित्यो न घूकेभ्यः, सज्जनेभ्यो न दुर्ज्जनः । रोचते न तथा तेभ्य–स्तेषामभ्युदयो वरः ॥ १२ ॥ देव्या पद्मावतीनाम्न्या, शिरोर्त्तिर्विकृता तदा । अमन्दं चक्रुराक्रन्दं, ततस्ते बाढपीडया ॥ १३ ॥ सहस्रसंख्या भूदेवाः, शोकसंतप्तचेतसः । स्वस्वगोत्रजदेव्यादे–र्भोगादीनि वितेनिरे ॥ १४ ॥ देव्योऽप्यूचुरिहास्माभिः, काऽपि न स्यात् प्रतिक्रिया । किन्तु पद्मावतीदेवी, स्मर्यतां तैस्तथा कृतम् ॥ १५ ॥ ततः पद्मावती प्राह, प्रत्यक्षीभूय तान् प्रति । रे दुष्टाः ! केयमस्थाने, भवतां हर्षकारिता ॥ १६ ॥ एषां त्रैलोक्यपूज्यानां, विपत्तौ त्रिदशा अपि । बभूवुः शोकसंतप्ता, भवन्तो न तु बालिशाः ॥ १७ ॥ तर्जयित्वेति तान् देवी, वचः पुन-

पत्तने कुरुते राज्यं, भीमो भूरिपराक्रमः । तस्यास्ति डामरो दूतो, द्विजोऽत्यन्तकुरूपवान् ॥ १ ॥ परं वचस्वी सर्वत्र, निःक्षोभः समयोचितम् । वेत्ति वक्ति च तेनैष, गर्वमुद्वहते हृदि ॥ २ ॥ तदा च मालवे राजा, भोजोऽभङ्गुरभाग्यवान् । दाता भोक्ता गुणी शूरः, प्रतापी विनयी नयी ॥ ३ ॥ तस्य पार्श्वेऽन्यदा भूपस्तं दूतं प्रेषयन्नभूत् । तत्र गत्वा त्वया वाच्य–मेवमेवं च भो द्विज ! ॥ ४ ॥ चिरं तदुक्तमालोच्य, श्रुत्वा कृत्वाऽवहीलनम् । तत उत्तिष्ठता तेन, वस्त्रप्रान्ता विधूनिता ॥ ५ ॥ किमेतदिति राज्ञोक्ते, सोऽब्रवीत्तव भाषितम् । अत्रैव निखिलं मुक्तं, ततो रुष्टो भृशं नृपः ॥ ६ ॥ तथा कुर्वे यथा तत्र, गतस्तत्रत्यभूभुजा । असौ विडम्ब्यते पापी, प्रत्यनीको ममोपरि ॥ ७ ॥ गूढकोपस्ततो भूपो, दुकूलबहुवेष्टनैः । रक्षां निबध्य सौवर्णे, निधाय च समुद्गके ॥ ८ ॥ मुद्रां दत्वा च तद्धस्ते–ऽर्पयित्वा तं जगौ नृपः । मत्प्राभृतमिदं तस्मै, ढौकनीयं नृपाय भोः ! ॥ ९ ॥ चचाल दूतः क्षेमेण, श्रीधारानगरे गतः । मिलितो भोजभूपस्य, तद्रूपं वीक्ष्य सोऽप्यवक् ॥ १० ॥ यौष्माकाऽधिपसन्धिविग्रहपदे दूताः कियन्तो द्विज !, मादृक्षा बहवोऽपि मालवपते ! ते सन्ति तत्र त्रिधा । प्रेष्यन्तेऽधममध्यमोत्तमधियः प्रेष्यानुरूपक्रमा–त्तेनान्तःस्मितमुत्तरं विदधता धाराऽधिपो रञ्जितः ॥ ११ ॥ विस्मितो हृदि भूपाल–स्तं सस्नेहमवादयत् । मुक्तं तेनापि तस्याग्रे, प्राभृतं तन्नृपार्पितम् ॥ १२ ॥ सम्भूय पार्षदाः सर्वे, दृष्ट्वा स्वर्णसमुद्गकम् । किमप्यपूर्वभाव्यत्रे–त्यभूवन् दर्शनोत्सुकाः ॥ १३ ॥ यावदुद्घाटयामास, परःशतमनोरथैः । रक्षां वीक्ष्य विलक्षास्यो, नृपः किमिदमित्यवक् ॥ १४ ॥ दूतोऽपि

दध्यौ पापेन, नूनं तेन महीभुजा । ममोज्जासनमारेभे, ब्रूवे तत्समयोचितम् ॥ १५ ॥ देवावधार्यतामस्म–त्स्वामिना शान्तिहेतवे । अश्वानां मानवानां च, पीडितानां रुजां भरैः ॥ १६ ॥ लक्षहोमकृतो यागो, रक्षा तस्येयमुत्तमा । अपि सौवर्णिकेनाऽस्या, लवोऽपि नहि लभ्यते ॥ १७ ॥ षाण्मासिकोऽपि यो रोगो–ऽनया याति भवेन्न च । एतस्यास्तिलमात्रं तु, यः प्राप्नोति स भाग्यवान् ॥ १८ ॥ अन्तःपुरीणामश्वानां, पौराणां च क्षणादभूत् । रोगोपशान्तिरेतस्याः, प्रभावात् किं बहूच्यते ॥ १९ ॥ भवतोऽभीष्टमित्रत्वा–देतावत् प्राभृतं ननु । प्रेषितं तेन भूपेन, तदिमां बहु मानय ॥ २० ॥ हृष्टेन भूभुजा सर्व–सभ्यानां स्त्रीजनस्य च । स्तोका स्तोकाऽर्पिता सप्र–भावत्वाज्जगृहे च तैः ॥ २१ ॥ दूतस्य तस्य राज्ञा तु, स्वर्णपञ्चशती वरा । तुरङ्गपट्टकूलादि, ददे तन्मुखयाचितम् ॥२२॥ सर्वं लात्वा समायातः, पत्तने भीमभूपतेः । तत्सर्वं दर्शयामास, हृष्टो राजाप्युवाच तम् ॥ २३ ॥ अरे ! त्वया तत्र गत्वा, किं किमुक्तं वदाऽधुना । सोऽप्युवाच यथोक्तं स्वं, भूपोऽत्यर्थं विसिष्मये ॥ २४ ॥ पुनरप्येकदा गर्व–परं तं नृपतिर्जगौ । गर्वं किं कुरुषे ? मूढ !, मत्प्रसादेन जीवसि ॥ २५ ॥ निजवाक्कलयैवाऽहं, जीवामि तव किं ? नृप ! । एवं विवादे भूयोऽपि, तं तत्र प्रेषयन्नृपः ॥ २६ ॥ अर्पितो मुद्रितो लेख–स्तदानीं तस्य भूभुजा । क्रमात्तत्र गतो दूतो, यत्रास्ते भोजभूपतिः ॥ २७ ॥ तदा च स्नानपीठस्थो, वारिक्लिन्नशिरा नृपः । तमाललाप भो दूत !, स्वागतं तव वर्त्तते ॥२८॥ हास्येन पृष्टं भूपेन, भीमडो नापितस्तव । स्वामी पत्तनवास्तव्यः, किं कुर्वन्नस्ति साम्प्रतम् ॥ २९ ॥ सोऽप्याह

राज्ञां शीर्षाणि, बहूनामस्ति मुण्डयन् । तवाप्यार्द्रीकृतेऽमुष्मिन् , नायात्यद्यापि वारकः ॥ ३० ॥ ध्वनितस्तेन वाक्येन, स्वर्णजिह्वामदापयत् । यद्वा न रोचते कस्मै, वचनं समयोचितम् ॥ ३१ ॥ अथ लेखं तमुन्मुद्रय, यावद्वाचयति स्वयम् । तत्राऽपश्यदयं तावद् , दूतो व्यापाद्यतामिति ॥ ३२ ॥ क्षणं विमृश्य दूताग्रे, तं तथावृत्तमाह सः । आकारगोपनं कृत्वा, दूतोऽप्येवमुवाच तम् ॥ ३३ ॥ श्रूयतामद्य राजेन्द्र !, स्मृता मे जन्मपत्रिका । तस्यां लिखितमित्यस्ति, दैवज्ञेन हितैषिणा ॥ ३४ ॥ पञ्चाशत्तमवर्षेऽस्या–वलिकास्ति विपत्करी। यत्र चास्य मृतिस्तत्र, दुर्भिक्षं द्वादशाब्दिकम् ॥ ३५ ॥ धूर्त्तेन तेन भूपेन, प्रेषितोऽहमिह प्रभो ! । अस्तु मे मरणं तेन, तद्ग्रासाऽनृण्यमिच्छतः ॥ ३६ ॥ सप्रगल्भमिति प्रोच्य, शस्त्रीं कुक्षौ क्षिपत्ययम् । यावत्तावत्करे राजा, धृत्वा तं निरवारयत् ॥ ३७ ॥ मरिष्याम्येव देवाऽहं, निषेधः क्रियते कुतः ? । स्वामिकार्ये यदि प्राणा, यान्ति तद्यान्तु गत्वराः ॥ ३८ ॥ सौवर्णिकसहस्रेण, पञ्चशत्या च वाजिनाम् । निषिध्य म्रियमाणं तं, स्वदेशादप्यचीक्लृपत् ॥ ३९ ॥ महताडम्बरेणैष, भीमभूपं प्रणेमिवान् । यथाजातं च वृत्तान्तं, स्वं जगौ स सविस्तरम् ॥ ४० ॥ ततः प्रभृत्येष नृपादिकानां, बभूव मान्यो निजवाक्कलातः । तत्रैव तेन क्रियतां मनः स्वं, लोकद्वये वः सुखिता यथा स्यात् ॥ ४१ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे नवम उपदेशः ॥ ९ ॥

न्यायो नराणां परमं निधानं, न्यायेन विश्वानि सुखीभवन्ति । न्यायोपपन्नं पुरुषं श्रयन्ति, श्रियः श्रवन्त्यः सरितामिवेशम् ॥ १ ॥ श्रीरामनाम स्मरति प्रतिप्रगे, जनः समग्रो न तु रावणाऽभिधाम् । पूर्वो ददौ किं जगृहे च किं परः, सन्नयाय एवात्र विभर्त्ति हेतुताम् ॥ २ ॥

यतः—

यान्ति न्यायप्रवृत्तस्य, तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं, सोदरोऽपि विमुञ्चति ॥ १ ॥
गया तिदीहा दहवयण, जिहिं सुरसेव करंति । दीहपलट्टइं रावणह, पत्थर नीरि तरन्ति ॥ २ ॥
ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे, वार्द्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः, श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ ३ ॥

पतन्त्यो भित्तयो यस्मा—ज्ञया तिष्ठन्ति निश्चलाः । वशीभवन्ति भूताद्या, अपि यन्नामकीर्त्तनात् ॥ १ ॥ आस्तां यच्चरितं तस्य, सेवकोऽपि नरेश्वरः । यशोवर्माऽभिधो न्यायी, यथाऽभून्नापरस्तथा ॥ २ ॥ कल्याणकटके राम, इव नीतिलताम्बुदः । यशोवर्माऽभिधो भूपो, भुङ्क्ते साम्राज्यमूर्जितम् ॥३॥ द्विष्टः पुत्रोऽपि तस्याऽऽसीत् , त्याज्यः स्वाङ्गस्थपङ्कवत् । गुणवानस्वकीयोपि, मान्यः पुष्पमिवाऽभवत् ॥४॥ निजप्रतोलीद्वारे स, न्यायघण्टामवन्धयत् । यस्य यस्य यदा कार्यं, तदा तां स स वादयेत् ॥ ५ ॥ तच्चिन्तां कुरुते भूपः, प्राणैरपि धनैरपि । एवं पालयतो न्यायं, तस्य

गच्छन्ति वासराः ॥ ६ ॥ तस्य न्यायपरीक्षार्थं, राज्याऽधिष्ठातृदेवता । विधाय सुरभीरूपं, राजमार्ग्गेऽन्यदा स्थिता ॥ ७ ॥ वत्समेकं च सौन्दर्य–सौकुमार्यमनोहरम् । विकुर्व्य सद्यः सञ्जातं, स्वपार्श्वे सा न्यवीविशत् ॥ ८ ॥ अत्रान्तरे राजसौधा–दारुह्य वरवाहिनीम् । तत्रागच्छन्नभूत्तस्य, राज्ञः पुत्रोऽतिदुर्दमः ॥ ९ ॥ अतिवेगवशाच्चैष, वाहिनीं तामवाहयत् । तस्यैवोपरि वत्सस्य, स वराको मृतः पुनः ॥ १० ॥ धेनुः कोकूयतेऽत्यर्थं, मुञ्चत्यश्रुणि निर्भरम् । लोको हाहारवं चक्रे, प्रेक्ष्य तादृग्दशां तयोः ॥ ११ ॥ केनाप्यालापिता चैपा, भद्रे! राजकुलं व्रज । न्यायघण्टास्ति या तत्र, शृङ्गाभ्यां तां च वादय ॥ १२ ॥ यथा तवैतदन्याय–प्रतीकारं नृपः सृजेत् । पञ्चमो लोकपालोऽयं, सर्वसाधारणो यतः ॥ १३ ॥ श्रुत्वेति सा गता तत्र, घण्टां बाढमताडयत् । तस्मिंश्चावसरे भूपो, भोजनायोपविष्टवान् ॥ १४ ॥ घण्टानिनादमाकर्ण्या–ऽकाले भूपः ससम्भ्रमः । इदानीं चालिता केन, घण्टेत्याख्यत्स्वसेवकान् ॥ १५ ॥ विलोक्य तेऽपि तं प्राहु–र्नान्यः कोऽप्यत्र गां विना । अकाले गौः कुतोऽत्रेति, स्वयमेवोत्थितो नृपः ॥ १६ ॥ तत्रागत्य स धेनुं तां, सदुःखं प्राह भूपतिः । भवत्या अपि हा !पापी, कश्चकार पराभवम् ॥ १७ ॥ पराभूताऽसि येन त्वं, तं दर्शय ममाऽधुना । वराकी सा तु नो वेत्ति, वक्तुं मानवभाषया ॥ १८ ॥ किन्तु सा पूरतोभूय, पृष्ठिलग्नस्य भूपतेः । तं वत्सं दर्शयामास, जीवितव्यमिवात्मनः ॥ १९ ॥ उवाच भूपो हट्टादौ, सन्निविष्टं महाजनम् । क्रूरकर्म्मेदृशं चक्रे, कः पापीति निवेद्यताम् ॥ २० ॥ तदन्यायविधातारं, सर्वे जानन्ति मानवाः । न कोऽपि भाषते किन्तु, तत्सुताऽनर्थ-

शङ्कया ॥ २१ ॥ अतिप्रश्नेऽपि भूपस्य, यावत्कोऽपि न भाषते । तावत् क्रुद्धो नृपः प्राह, सभ्रूक्षेपमिदं वचः ॥२२॥
आः ! पापिनो भवन्तोऽपि, यदीदृगसमञ्जसम् । दृष्टमप्युच्यते यन्न, धिग्वस्तत्पक्षपातिनः ॥ २३ ॥ तदैव भोक्ष्ये यद्ये-
त-त्पापकारी नराधमः । ममाग्रे प्रकटो भावी-त्यभिग्रहमथाऽग्रहीत् ॥ २४ ॥ तस्य न्यायैकनिष्ठस्य, सन्ध्यावधि
निषेदुषः । तद्दिने लङ्घनं जात-महो ! न्यायप्रधानता ॥ २५ ॥ सन्ध्यायां मन्दिरे प्राप्त-स्तनयस्तस्य भूपतेः । प्राह
स्वकृतमन्यायं, मम दण्डं कुरु प्रभो ! ॥ २६ ॥ स्वपुत्रकृतमन्यायं, श्रुत्वा दूनो नराधिपः । स्वर्णेनापि हि किं तेन,
कर्णच्छेदो भवेद्यतः ॥ २७ ॥ प्रातः पर्षदि भूपेन, पृष्टा नीतिविशारदाः । अस्य पुत्रस्य को दण्डो, विधेय ? इति क-
थ्यताम् ॥ २८ उक्तं तैरेक एवायं, राज्यार्हस्तनयस्तव । एकलोचनसङ्काशः, कोऽस्य दण्डो भवेत्प्रभो ! ॥ २९ ॥
न्याय एव प्रधानो मे, दुर्नयेन सुतेन किम् ?। अन्येऽप्येवं वितन्वन्ति, शिक्षा चेन्नाऽस्य दीयते ॥ ३० ॥ ततोऽस्य यो
भवेद्दण्ड-स्तं वदन्तु विशारदाः !। मनागपि न कार्यं मे, दाक्षिण्यमभयं हि वः ॥३१॥ तैरुक्तं देव ! यो यादृक्, कुरुते
तस्य तादृशम् । अमनोज्ञं मनोज्ञं वा, क्रियते शास्त्रगीरिति ॥ ३२ ॥ अवाहयद्यथा वत्सो-परिष्टादेष वाहिनीम् । जनानु-
तथाऽस्यापि विधीयेत, दण्डः कोऽप्यस्य नापरः ॥ ३३ ॥ आनाय्य वाहिनीं पुत्रं, स्थापयित्वा च वर्त्मनि । प्रत्यक्षं सर्वलोकानां,
वाच भो एषा, पुत्रस्योपरि वाह्यताम् ॥ ३४ ॥ ईदृग्विधं तदादेशं, यदा कोऽपि करोति न । आत्मीयेनापि किं तेन, न्यायो यस्य न
तदा भूप इदं जगौ ॥ ३५ ॥ अयं मदीयो दुष्पुत्रो, जीविताद्वा विनश्यतु ।

वल्लभः ॥ ३६ ॥ इत्युक्त्वा सहसोत्थाय, स्वयमेवोपविश्य च । यावत्तां वाहयत्येष, तस्योपरि दयोज्झितः ॥ ३७ ॥ तावन्न गां न वत्सं च, ददर्श स महीपतिः । सा देवी च पुरोभूय, तस्य श्लाघामिति व्यधात् ॥ ३८ ॥ जय सत्त्ववतांधुर्य !, जय न्यायपरायण ! । श्रीरामस्येव सौभाग्यं, त्वदीयं स्तुवते न के ? ॥ ३९ ॥ चिरायुस्ते सुतो भूयात्साम्राज्यं त्वं च पालय । परीक्षेयं मया चक्रे, इत्युक्त्वा सा तिरोऽभवत् ॥ ४० ॥ एवं न्यायः पालनीयो नृपाद्यैर्यस्मात्सर्वाः सम्पदो हस्तगाः स्युः । शस्यानि स्युः किं विना वारिवाहं, प्रावृट्काले प्राच्यमासद्वयोत्थम् ॥ ४१ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे दशम उपदेशः ॥ १० ॥

---

सदाऽपि धर्मः फलदो नृणां मतो, विशेषतः पर्वदिनेषु निर्मितः । प्रावृट्पयः सर्वमपीप्सितप्रदं, स्यात् स्वातिजं वारि तु मौक्तिकप्रदम् ॥ १ ॥ प्रायेण बन्धं तु भविष्यदायुषो, वदन्ति यत् पर्वदिने जिनादयः । विशिष्य धर्म्मे दृढता विलोक्यते, तस्मिंस्ततः सूर्ययशोनरेन्द्रवत् ॥ २ ॥

अभूदयोध्यापुरि मुख्यचक्रिणः, सुतः कृती सूर्ययशोनरेश्वरः । यदीयनाम्ना प्रथितः क्षमातले, श्रीसूर्यवंशोऽतिगरिष्ठविस्तरः ॥ १ ॥ युतः सहस्रैर्दशभिः क्षमाभुजां, करोत्यसौ पर्वणि पौषधव्रतम् । नाऽश्नन्ति भक्तं शिशवोऽपि तद्दिने, तदाज्ञया किं पुनरास्तिको जनः ? ॥ २ ॥ अथैकदा तद्गुणरञ्जितं शिरो, विधूनयन्तं हरिमुर्वशी जगौ । विना निमित्तं

सदापि वीणा–विनोदगीतादिषु वद्धकक्षे ॥ १४ ॥ देये इमे कस्य वरस्य ? नौ पिता, चकार चिन्तामिति यावदा त्मना । स्वाभीष्टताद्दक्षपतेरभावत–श्चिन्ताम्बुधेरेष निवार्त्तितस्तदा ॥ १५ ॥ सीमन्तिनीनां स्ववशः पतिर्यदि, स्यात्त त्सुखं गाढविडम्बनाऽन्यथा । सत्तीर्थसेवैव ततो विधीयते, भोगेषु रोगेष्विव नावयोर्मनः ॥ १६ ॥ श्रुत्वेति भूपानु-मतेश्च तत्पुरो, वचोऽथ मन्त्री निजगाद सादरम् । अयं हि पौत्रो वृषभस्य चक्रिणः, सुतः कलावान्बलवांश्च सद्गुणः ॥ १७ ॥ मया निषेध्यो युवयोर्वचोऽन्यथा–कुर्वन्नयं तत्क्रियतां पतिर्वरः । चेच्चेतसो वां रुचिरीदृशः पतिः, न लभ्यते क्वापि भवान्तरेष्वपि ॥ १८ ॥ अर्थेऽत्र साक्षी जिन एष एव यः, पुरो निविष्टोऽस्ति जनैः परैरलम् । इत्यादि गाढाग्रहतः सविस्तरं, तयोरभूत्तेन विवाहमङ्गलम् ॥ १९ ॥ सुखं स ताभ्यां सह भोगजं किय–द्दिनानि भुङ्क्ते स्म तदेकमानसः । सहस्रवर्षाऽवधि गङ्गया समं, भोगा न भुक्ता भरतेन किं वा ? ॥ २० ॥ कल्येऽष्टमीपर्व भविष्यतीत्यहो !, शृण्वन्तु लोकाः ! इति सर्वतः पुरे । प्रवाद्यमानः पटहः स्फुटस्वरं, ताभ्यां श्रुतोऽन्येद्युरमन्दखेदकृत् ॥ २१ ॥ अजानतीव क्षितिनाथमुर्वशी, जगौ किमेतत्पटहप्रवादनम् । विधीयते नाथ ! जगाद सोऽपि तां, कृशाङ्गि ! पर्वार्थमुपक्रमो ह्ययम् ॥ २२ ॥ त्रयोदशीसप्तमिकाऽऽदिवासरे, मदाज्ञयाऽसौ पटहः प्रवाद्यते । जानन्ति पर्वेतरयोर्विवेचनं, प्रमादपूर्णाः कथमन्यथा जनाः ? ॥२३॥ ममाज्ञया पर्वदिनेऽत्र पौषधं, तुर्यव्रतं ज्ञानतपःक्रियादि च । कुर्वन्ति लोकाः प्रतिषेधयन्ति च, स्नानं शिरोगुम्फनखण्डनानि च ॥ २४ ॥ उवाच रम्भाऽपि नरेन्द्र ! यौवनं, सद्भोगयोगः सुखसम्पदादिकम् ।

हार्यन्त एतानि करस्थितान्यपि, त्वया कथं प्रेत्यफलार्थिना मुधा ? ॥ २५ ॥ जगाद भूपोऽपि जिनेन्द्रभाषितं, व्यधायि तातेन महाफलं च यत् । पर्वव्रतं तत्कथमेष सुन्दरि !, त्यजाम्यहं स्तोकसुखस्य हेतवे ॥ २६ ॥ येषां न शीलं न तपो न च क्रिया, विवेकवैराग्यमुखा गुणाश्च न । तेषां पशूनामिव जन्म निष्फलं, भवेदिहामुत्र तु घोरदुर्गतिः ॥ २७ ॥ अथोर्वशी प्राह जिनेन्द्रसाक्षिकं, स्वजिह्वया यत्प्रतिपन्नमित्यभूत् । नोल्लङ्घनीयं युवयोर्मया वच-स्तद्विस्मृतं किं भवताऽपि भूपते ! ॥ २८ ॥ यदीयवाक्ये स्थिरता न विद्यते, धिक् सोऽपि मूर्खः पुरुषेषु गण्यते । स्वाधीनभर्तुः कृतये कुलादिकं, त्यक्तं कृतस्त्वं च सुखेप्सया पतिः ॥ २९ ॥ तन्नोभयभ्रष्टतयाऽस्ति मे सुखं, कस्याग्रतो वा परिदेव्यते विभो ! । इदं सकृत्ते विहितं परीक्षणं, प्रयातु ते वाग् मम किं प्रयास्यति ? ॥३०॥ तत्साधयिष्ये मरणं चिताऽनले, प्रविश्य मानोज्झितजीवितेन किम् ? । इत्यादि तप्तत्रपुतुल्यतद्वचः, श्रुत्वा नरेन्द्रः पुनरप्युवाच ताम् ॥ ३१ ॥ विद्याभृतस्त्वं तनयाऽसि नाऽधमे !, करालचण्डालकुलोद्भवा पुनः । कस्तूरिकाया भ्रमतो मयाऽञ्जनं, धत्तूरको वा जगृहे मरुत्तरोः ॥३२॥ गृहाण कोशं वसुधां गृहाण वा-ऽन्यद्वा यदिष्टं तव तत्करोम्यहम् । पर्वव्रतं त्याजय मा मम प्रिये !, यल्लोपतो दुर्गतिरेव निश्चितम् ॥ ३३ ॥ भूयोऽपि सा प्राह न यस्य विद्यते, वचःप्रतिष्ठा पुरुषाधमो हि सः । तदीयदानेन महीयसाप्यलं, भूयोऽपि भूपं कपटाङ्गना जगौ ॥ ३४ ॥ चेत् पर्वभङ्गो न करिष्यते त्वया, तत्पात्यतां मन्दिरमादिमं प्रभोः । शक्रावताराभिधमेतदुन्नतं, श्रुत्वेति वज्राहतवन्नृपोऽभवत् ॥ ३५ ॥ मुमूर्च्छ भूमौ सहसा पपात च, क्षणेन चैतन्यम-

वाप्य सोऽवदत् । आः पापिनि ! म्लेच्छकुले सुनिश्चितं, जातासि यत्ते वचनावलीदृशी ॥ ३६ ॥ यातां युवां द्वे अपि तन्ममान्तिका—त्ससान्त्वनं सा पुनरप्युवाच तम् । मद्वाक्यमप्येकमकारि न त्वया, पुनः पुनः किं तव नाथ ! जल्प्यते ॥ ३७ ॥ शिरः स्वपुत्रस्य समर्प्पयाऽथवे—त्युक्ते विना मां न सुतो ममैव तत् । गृहाण जल्पन्निति कण्ठमात्मन—श्छिनत्ति यावत्तरवारिणा नृपः ॥ ३८ ॥ वभूवतुस्तावदुभे अपि स्फुटे, तस्य प्रशंसामिति चक्रतुः पुनः । जय क्षमाधीश्वर ! चक्रिनन्दन !, प्रशान्तसर्वेन्द्रियसङ्गवर्ज्जित ! ॥३९॥ सम्वन्धमावेद्य विधाय पुष्पै—रत्नादिवृष्टिं च दिवं गते उभे । नृपोऽपि धर्मं सविशेषमातनोत् , प्राज्यं च साम्राज्यमपालयच्चिरम् ॥ ४० ॥ प्रान्ते च तातवदुपार्ज्जितकेवलश्री—र्मोक्षं जगाम भरताङ्गज एष भूपः । एवं च धर्म्मविषये दृढता विधेया, स्यात्सौख्यसम्पदखिलस्ववशा यथा वः ॥ ४१ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे एकादश उपदेशः ॥ ११ ॥

---

आराध्यमानो विधिनैव दत्ते, धर्मः फलं नैव हठे कृतेऽपि । न तं विना कामदुघापि दुग्धं, कृतव्ययस्यापि ददौ नृपस्य ॥ १ ॥ यस्तामलिः षष्टिसहस्रवर्षा—वधि स्वरुच्या विदधे तपांसि । अल्पं फलं सोऽपि विना विवेका—ल्लेभे ततः किं वहुकष्टयोगैः ? ॥ २ ॥ कूरगडुमुनिर्नित्य—भुक्तिसक्तोऽपि केवलम् । लेभे विवेकसाहाय्या—च्छ्रमणैरपि तैर्न तु ॥३॥

अथ प्रागुक्तदृष्टान्तो, भाव्यते पृथिवीपुरे । वभूव धनदः श्रेष्ठी, स प्रायो गोरसप्रियः ॥ १ ॥ दधि दुग्धं परान्नं च,

भुङ्क्ते भोजयते तथा । मित्राणि तेन सञ्जातं, गोधनं तस्य वह्वपि ॥२॥ काचिद्द्रोणदुघा काचि–द्दञ्जुला काऽपि सुव्र-ता । एवं गवांशतान्येष, सञ्जग्राह धनैर्घनैः ॥ ३ ॥ अथैकदा यानपात्रे, सौरभेयीः स पञ्चषाः । सारा आरोप्य वित्तार्थी, रत्नद्वीपे ययौ क्रमात् ॥ ४ ॥ नियन्त्र्य यानपात्राणि, महोदधितटे ततः । सुस्थाने स्थापयामास, स्वसार्थं स वणिग्वरः ॥ ५ ॥ सुगन्धिसर्पिःसत्खण्ड–क्षोदयोगगरीयसा । परमान्नेन पूर्णानि, स्थालान्यादाय नैकशः ॥ ६ ॥ अपूर्वत्वेन तत्रत्य–नृपाय प्राभृतं व्यधात् । श्रेष्ठी श्रेष्ठान्यपि त्यक्त्वा, रत्नवृन्दानि लेष्टुवत् ॥ ७ ॥ कणेहत्य तदास्वाद्य, सर्वेन्द्रियसुखप्रदम् । आकण्ठं विहितोद्गारः, प्रीतो भूपस्तमब्रवीत् ॥ ८ ॥ किमेतदुच्यते श्रेष्ठिन् !, कथं निष्पत्तिरस्य च । स्वर्गात् पातालतः किं वा, पीयूषमिदमाहृतम् ॥ ९ ॥ परमान्नमिदं देव !, विना भाग्यैर्न लभ्यते । दत्ते प्र-सन्ना किन्त्वेका, मम कामगवी सदा ॥ १० ॥ सन्तुष्टः श्रेष्ठिनः शुल्कं, मुमुचे मेदिनीपतिः । भूयांश्चाभूत्तस्य लाभः, कुर्वतः क्रयविक्रयम् ॥ ११ ॥ स्वपुरं गन्तुकामेना–ऽवसरे स महीपतिः । भाषितः स्वपुरं यामि, त्वमनुज्ञां ददासि चेत् ॥ १२ ॥ भूपोऽभ्यधात्कामगवी, याऽस्ति ते परमान्नदा । सा मह्यं देहि येन स्या–न्निश्चला प्रीतिरावयोः ॥१३॥ प्रसीद गृह्यतां स्वामिन् !, किं वाच्यमियति प्रभोः ?। इत्युक्त्वा तामदात्तस्मै, स्वयं तु स्वपुरं ययौ ॥ १४ ॥ अथ कामगवी तेन, स्थापिता वर्यमन्दिरे । आराधनविधिस्तस्या, एवमेवं च निर्ममे ॥ १५ ॥ क्रियन्ते विविधाः पूजाः, भोगयोगाश्च नैकशः । वीज्यतेश्चामरश्रेणि–र्ध्रियते छत्रसन्ततिः ॥ १६ ॥ दीनाराणां पञ्चशत्या–स्तस्या भोगं नरा-

धिपः । करोति कारयत्यन्यै–र्गीतनृत्यादिकोत्सवान् ॥ १७ ॥ मातर्मे परमान्नं च, देहि देहीति भाषते । न वेत्ति तदुपायं तु, निबिडाऽज्ञानपीडितः ॥ १८ ॥ चारिपानीयशुश्रूषा–विरहेण कियद्दिनैः । सा वराकी मृता राजा, निनिन्द स्वं तु पापिनम् ॥ १९ ॥ अहो ! अभाग्यमस्माक–महो ! पापभरो महान् । दैवेनोद्दालितं रत्नं, हस्तप्रासमपि क्षणात् ॥ २० ॥ स एवाऽन्येद्युरायातः, श्रेष्ठी तत्र तथैव च । नृपाय प्राभृतं चक्रे, तदा भूपस्तमभ्यधात् ॥ २१ ॥ अर्पिता कामधेनुर्या, त्वयाऽस्माकं हितेच्छया । परमान्नं तया दत्तं, स्वल्पमप्येकदाऽपि न ॥ २२ ॥ भक्तिप्रकारा नैकेऽपि, कृतास्तस्यास्तदादिभिः । परं प्रत्युत्तरं किञ्चि–त्तया दत्तं न जातुचित् ॥ २३ ॥ दूरेऽस्तु परमान्नं त–द्वार्त्तापि न तया कृता । किं तत्राऽभाग्यमस्माक–मन्यद्वा कारणान्तरम् ?॥ २४ ॥ श्रेष्ठी बभाण राजेन्द्र!, तस्याः शुष्कतृणादिकम् । दीयते दुह्यते वार–द्वितयं गृह्यते पयः ॥ २५ ॥ तत्पयस्तन्दुलैः सार्द्धं, पच्यते ज्ञायते ततः । परमान्नमयं तस्य, विधिः किमपरैर्व्ययैः ? ॥ २६ ॥ ज्ञातोपायस्ततो भूपः, परमान्नमपीपचत् । तेनाऽभूत् सुखितोऽवादीत् , परेभ्योऽपि विधिं च ताम् ॥ २७ ॥ धर्म्मोऽपि विधिनाराद्धः, एवं सौख्यप्रदो भवेत् । विना विधिं कृतोऽप्येष, स्यादल्पफलदो नृणाम् ॥ २८ ॥ यतः—

आराधितः पूर्वभवेषु धर्म्मो, यैर्निर्विवेकैश्च विवेकिभिश्च ।
यथा क्रमन्ते विहिते द्वयेऽपि, श्रीपत्तयः श्रीपतयश्च तेन ॥ १ ॥

एवं भो भविकाः! निपीय विधिना धर्मामृतं तात्त्विकं, भुक्त्वा मानवदेवसेवितपदाः संसारसौख्यावलीः।
निष्प्रत्यूहतया प्रयास्यथ शिवं यूयं कुदेवादिकं, मा तत्र क्षिपतोल्बणं तु गरलं चेद्वो विवेको हृदि ॥ २९ ॥

॥ इति श्रीउपदेशसप्ततिकायां चतुर्थेऽधिकारे द्वादश उपदेशः ॥ १२ ॥

---

॥ इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिक्रमकमलमरालमहोपाध्यायश्रीचारित्ररत्नगणिविनेयपरमाणुपण्डितसोमधर्मगणिविरचितायां श्रीउपदेशसप्ततौ सामान्यधर्माऽधिकारश्चतुर्थः ॥

---

# ॥ अथ गृहस्थधर्माऽधिकारः पञ्चमः प्रारभ्यते ॥

श्रीधर्म एव निधिरक्षय एष सौख्य–श्रीणां हितः स्वपरयोश्च भवान्तरेऽपि ।
श्रीधर्मराजचरितं विनिशम्य सम्यक् , कस्तत्र वा शिथिलमादरमातनोति ॥ १ ॥

अस्त्यत्र भरतक्षेत्रे, नगरी सर्वमङ्गला । तत्र वित्रासिताराति–र्भूपतिर्भद्रशेखरः ॥ १ ॥ सभामध्यास्त स क्ष्मापः, परिवारयुतोऽन्यदा । तदा नैमित्तिकः कोऽपि, प्रासस्तत्र त्रिकालवित् ॥ २ ॥ यथोचितासने राज–दापिते स उपाविशत् । उदस्य हस्तं सर्वेभ्यः, आशीर्वादमुवाच च ॥ ३ ॥ नृपोऽप्राक्षीन्निमित्तज्ञ !, भविष्यद्वद कीदृशम् ? । स्वरूपं भावि सोऽप्याह, माऽधुना पृच्छयतां प्रभो ! ॥ ४ ॥ विशेषतो नृपोऽपृच्छ–दुत्पातः कोऽपि दैवतः ? । किं भावी ? सोऽप्यभाषिष्ट, दुर्भिक्षं द्वादशाब्दिकम् ॥ ५ ॥ अकाण्डाऽशनिसम्पात–सन्निभं तद्वचो नृपः । श्रुत्वा सदुःख इत्याख्यत्, रे! विमृश्य वचो वद ॥६॥ समक्षं सर्वसभ्यानां, निमित्तज्ञोऽब्रवीत्पुनः । मद्भाषितं वृथा स्याच्चे–च्छेद्या जिह्वैव मे तदा ॥ ७ ॥ तत्प्रतिज्ञां दृढामेवं, निशम्य क्ष्माभुजाऽपि सः । अस्थापि स्वपुरे क्वापि, गन्तुं नैव ददे तथा ॥ ८ ॥ सर्वादरात् सर्वलोकै–श्चक्रे धान्यस्य सङ्ग्रहः । स्वकुटुम्बानुमानेन, गत्वा देशान्तरेष्वपि ॥ ९ ॥ स्वस्ववित्तान्यनादृत्य,

दीन्नियमानसौ । प्रतिपेदे क्रमाद्भाग्यैः, सोऽपि जातो महर्द्धिकः ॥ २५ ॥ प्राच्यावस्थां निजां तेन, स्मरता हृदि मण्डिताः । सज्जीकृतान्नपानाद्याः, सत्रगेहाः पदे पदे ॥ २६ ॥ रङ्कादारभ्य भूपान्तं, मनुष्यान् लक्षसम्मितान् । तदा सन्तोषयामास, साधूंश्चापि सहस्रशः ॥ २७ ॥ दानपुण्यमखण्डं त–ज्जीविताविधि स व्यधात् । भवेऽत्र तदसौ जातः, आधारः सर्वभूस्पृशाम् ॥ २८ ॥ दुर्भिक्षमभविष्यच्चे–ज्जातो नाऽभूदयं शिशुः । यदेषमोऽन्यदेशेषु, स्तोका एवाभवन् घनाः ॥ २९ ॥ अतो नैमित्तिकः सत्य–स्त्वमेतं माऽवहीलय । श्रुत्वेति विस्मितो राजा, सूरीन्नत्वा गतो गृहम् ॥३०॥ आनाय्य बालकं चक्रे, तमेव नृपतिं नृपः । औचित्याऽऽचरणे सन्तः, किं मुह्यन्ति कदाचन ? ॥३१॥ यस्याऽऽधारे प्रवर्त्तन्ते, प्रजाः सौख्यसमृद्धिभिः । स एव कीर्त्यते राजा, इति स्मृतिवचो यतः ॥ ३२ ॥ धर्म्मराज इति प्रत्त–नामा भूपसुखैर्जनैः । स बालोऽप्यभवद्राजा, बालार्क इव तेजसा ॥ ३३ ॥ तदाज्ञा यत्र देशेऽभूत्, दुर्भिक्षं तत्र नाऽभवत् । विक्रीयाऽन्येषु देशेषु, धान्यानि द्युम्नमर्जितम् ॥ ३४ ॥ एवं स धर्म्मप्रवणः प्रभावनां, चक्रे चिरं श्रीजिनराजशासने । प्रान्ते परिव्रज्य तपोभिरुत्कटैः, स मोक्षसौख्यं समवाप भूपतिः ॥ ३५ ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे प्रथम उपदेशः ॥ १ ॥

---

साम्राज्यमारोग्यमनेकसम्पदः, प्रधानरूपं शुभमायुरायतम् । जीवाऽनुकम्पा परचेतसां नृणां, भवे भवे स्युः कि-

मिहोच्यते बहु ॥ १ ॥ वेदे पुराणे स्मृतिषु प्ररूप्यते, यस्याः प्रधानत्वमनेककोविदैः। विशिष्य तु श्रेष्ठतमे जिनागमे, कस्को न तां जीवदयां हि मन्यते ?॥ २ ॥ श्रूयते हि कपोतेन, शत्रुरप्यात्ममन्दिरे । प्रासो निमन्त्रितः स्वीय-मांसैः सदयचेतसा ॥ ३ ॥

कपोतदम्पती क्वापि, कानने कान्तपादपे । निवासं कुरुतः काम-मन्योऽन्यमनुरागिणौ ॥ १ ॥ वने तत्राऽन्यदा कोऽपि, ज्ञानी साधुः समाययौ । लाभं ज्ञात्वा तयोरग्रे, स चक्रे धर्म्मदेशनाम् ॥ २ ॥ श्रुत्वा तस्य मुनेर्वाक्यं, तत्कपोतयुगं तदा । तन्वद्यथोचितं धर्म्मं, समया कुरुते क्रमात् ॥ ३ ॥ माघमासेऽन्यदा तत्र, लुब्धकः कश्चिदाययौ । कृतान्ततुल्यः क्रूरात्मा, सपाशो हस्तपञ्जरः ॥ ४ ॥ स्थाने स्थाने च कुर्वाणः, स पापी पक्षिबन्धनम् । आयातस्तत्र यत्रास्ति, तत्कपोतयुगं मुदा ॥ ५ ॥ स्वप्राणवृत्तिं कुर्वाणा, कपोती तेन पापिना । निबध्य पञ्जरे क्षिप्ता, किमकृत्यं न पापिनाम् ?॥ ६ ॥ इतश्च हिमसंसिक्त-सवातजलवृष्टिभिः। वेपमानवपुर्व्याधः, सायं तं वृक्षमाश्रितः॥ ७ ॥ असह्यस्फीतशीतेन, व्याप्यमानवपुः क्रमात् । मूर्च्छामतुच्छां स प्राप-दहो ! पापफलं महत् ॥ ८ ॥ कपोती पञ्जरान्तस्था, वृक्षकोटरगं तदा । कपोतं स्वप्रियं प्राह, ममैकं त्वं वचः शृणु॥ ९ ॥ एष शाकुनिकः शेते, तवाऽऽवासं समाश्रितः । शीतार्त्तश्च क्षुधार्त्तश्च, तदस्मै हितमाचर ॥१०॥ मत्प्रियाऽनेन बद्धेति, मा चाऽस्मै त्वं रुषं कृथाः । स्वकृतैरेव बद्धाहं, प्राक्तनैः कर्ममर्मभिः ॥ ११ ॥ दारिद्र्यरोगदुःखानि, बन्धनव्यसनानि च । आत्माऽपराधवृक्षस्य, फलान्येतानि

देहिनाम् ॥ १२ ॥ ततस्त्वं द्वेपमुत्सृज्य, मद्वन्धनसमुद्भवम् । धर्म्मे मनः स्थिरं कृत्वा, जीवयैनं च भोजय ॥ १३ ॥ अग्निस्थाने ततो गत्वा, ज्वलत्काष्ठतृणादिकम् । निजशक्त्यनुमानेन, चञ्च्वाऽऽदाय स सत्वरं ॥१४॥ तत्र प्रासः स यत्राऽस्ति, लुब्धकः शीतमूर्च्छितः । ततः शुष्केपु पर्ण्णेपु, तमाशु समदीपयत् ॥१५॥ तापयस्वाऽत्र विश्रब्धं, स्वाङ्गानीत्याह लुब्धकम् । पक्षिणामप्यहो ! लोको—त्तरा काऽप्युपकारधीः ॥ १६ ॥ किञ्चिदुत्पन्नचैतन्यं, कपोतो व्याधमब्रवीत् । न मेऽस्ति विभवः कश्चि—द्येन ते नाशये क्षुधम् ॥ १७ ॥ सहस्रम्भरयः केचि—त्कश्चिल्लक्षम्भरिर्नरः । मम त्वकृतपुण्यस्य, क्षुद्रस्याऽऽत्माऽपि दुर्भरः ॥१८॥ एकस्याऽप्यतिथेर्भोज्यं, प्रदातुं क्षमते न यः । तस्याऽनेकपरिक्लेशे, गृहे किं वसतः फलम् ? ॥ १९ ॥ तत्तथा साधयाम्येत—च्छरीरं दुःखजीवितम् । यथा भूयो न वक्ष्यामि, नास्तीत्यर्थिसमागमे ॥ २० ॥ गृहाण त्वं मदीयं च, भटित्रीभूतमामिषम् । इत्युक्त्वाऽग्नौ पपातैष, भस्मसाच्च क्षणादभूत् ॥ २१ ॥ लुब्धकोऽपि तदा दध्यौ, कोऽप्ययं करुणापरः । कपोतो योऽग्निसाच्चक्रे, स्वकायं मत्कृते हहा ! ॥ २२ ॥ यः करोति नरः पापं, न तस्याऽऽत्मा ध्रुवं प्रियः । आत्मना हि कृतं पाप—मात्मनैव हि भुज्यते ॥ २३ ॥ ममाऽप्यहो ! नृशंसस्य, प्रतिबोधः प्रकाशितः । कपोतेन स्वमांसानि, ददानेन महात्मना ॥ २४ ॥ निष्कारुण्येष्वहं मौलि—रयं च सदयात्मसु । ध्यात्वेति भग्नवानेप, पञ्जरं पापमन्दिरम् ॥ २५ ॥ कपोतीं तां विमुच्यैप, वराकीमात्ममन्दिरे । गत्वा कुटुम्बं व्युत्सृज्य, तापसव्रतमग्रहीत् ॥ २६ ॥ तप्यमानस्तपस्तीव्रं, दवादप्यन्यदा वने । अभीतः प्रतिमास्थोऽसौ, तद्दग्धो मृत्युमासवान् ॥ २७ ॥ कपो-

त्यपि कपोतेन, वियुक्ता विरता भवे। दयाधर्म्मरता काले, प्राप प्रेतपतेर्गृहम् ॥ २८ ॥ एवं त्रयोऽपि ते जीवाः, दयाधर्म्मपरायणाः। दिवि देवा अजायन्त, पश्यताऽहो! दयाफलम् ॥ २९ ॥ इति पौराणिकः सोऽयं, सम्बन्धो लिखितो मया। अनुकम्पा ततः कार्या, सर्वैः सर्वेषु जन्तुषु ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे द्वितीय उपदेशः ॥ २ ॥

---

यस्याऽस्ति धर्म्मे दृढता पराभवं, न व्यन्तराद्या अपि तेषु कुर्वते।
देवी च देवश्च वणिग्वरेण, न वञ्चितौ किं निजशुद्धबुद्ध्या ? ॥ १ ॥

अभूद्देवपुरे श्रेष्ठी, कुलानन्दः कुलोत्तमः। जिनधर्म्मदृढः कोटी—ध्वजोऽक्षोभ्यः सुरैरपि ॥ १ ॥ पुत्राऽभावात् परं किञ्चि—त्सचिन्तं तं जनाः जगुः। पुराऽधिष्ठायिका सत्य—प्रत्यया वर्त्तते सुरी ॥ २ ॥ किं नोपयाचितं तस्याः ?, मन्यते किं धनैर्घनैः ?। इत्यादि लोकैरुक्तोऽपि, श्रेष्ठी तु प्रति वक्ति तान् ॥ ३ ॥ भो मूर्खाः! एकशो भक्ति—र्यक्षादीनां क्रियेत चेत्। पुनः पुनस्तदीप्सायां, तेषां किं सुखमात्मनः ? ॥ ४ ॥ यतः—

"वेसाण वंदिआण य, माहणडुंवाण जक्खरक्खाणं। भत्ता भक्खट्ठाणं, विरयाणं जंति दूरेण ॥ १ ॥"

इत्यादि तत्त्ववार्त्ताभि—र्दृढीकुर्वन्निजं मनः। जनैः प्रभूतैरुक्तोऽपि, सम्यक्त्वे निश्चलोऽभवत् ॥ ५ ॥ पत्नी तु मुग्धभावेन, श्रुत्वा तल्लोकभाषितम्। देवीभवनमागत्य, स भक्त्यैवं वचो जगौ ॥ ६ ॥ मातर्मे त्वत्प्रसादेन, तनयो

भविता यदि । लक्षत्रयमयीं पूजां, ढौकयिष्यामि ते तदा ॥ ७ ॥ क्रमेण तनये जाते, भर्त्तुस्तदुपयाचितम् । तयोक्तं तद्वचो मेने, सोऽपि तस्याः कदाग्रहात् ॥ ८ ॥ श्रेष्ठी त्रिलक्षनिष्पन्न–सौवर्णकुसुमत्रयम् । निर्म्माप्य रत्नजटितं, सपौरः सकुटुम्बकः ॥९॥ देवीभवनमागत्य, पूजापूर्वं सविस्तरम् । तां भाले भुजयोः पुष्प–त्रयन्यासादपूपुजत् ॥१०॥ स्वस्य पत्न्याः शिशोश्चैष, शेषार्थं कुसुमत्रयम् । दत्त्वा गृहीत्वा स्वं धामा–ऽऽजगाम दृढदर्शनः ॥ ११ ॥ दृष्ट्वा शठचरित्रं तद् , विलक्षा व्यन्तरी जगौ । एकान्ते निजमित्रस्य, सीहडस्य सदुःखितम् ॥ १२ ॥ किं करोमि ? शठेनाऽहं, वणिजाऽनेन वञ्चिता । पुष्पाणां पूजया युक्ति–पूर्वं तद् ग्रहणेन च ॥ १३ ॥ सीहडोऽपि सदुःखां तां, जगौ त्वं छुटिता मुधा । शृणु मूर्खे ! चरित्रं मे, यथाऽनेन कदर्थितः ॥ १४ ॥ पुरा प्रवहणान्यस्य, गतप्रायाणि जज्ञिरे । न शुद्धिः काऽप्यभूत्तेषां, सुबह्वपि गवेषिता (?) ॥ १५ ॥ ततः प्रच्छन्नमेतस्य, बन्धुर्मह्यममानयत् । महान्तं महिषं पोत–क्षेमागमनकाङ्क्षया ॥१६॥ आलोड्य जलधिं सर्वं, मयाऽपि निजशक्तितः । तान्यानीतानि हर्षोऽभूत्, सर्वेषामपि चेतसि ॥ १७ ॥ तन्मध्यागतवस्तूनां, कुर्वतः क्रयविक्रयम् । भूयान् यदभवल्लाभो, ममैव स्फुर्जितं हि तत् ॥ १८ ॥ भ्राताऽप्यवसरे प्राह, श्रेष्ठिनोऽग्रे स्वमानितम् । एष धूर्त्तस्तमाचष्ट, करिष्ये तव मानितम् ॥ १९ ॥ आनीय तरुणं चैकं, महिषं मम मन्दिरे । गृहाण भक्ष्यं यक्षेदं, यद्भ्रात्रा तव मानितम् ॥ २० ॥ उक्त्वेति तस्य कण्ठस्थ–रज्जुं मे गलकन्दले । बबन्ध निबिडग्रन्थि–दानपूर्वं दुराशयः ॥ २१ ॥ पूजादिविस्तरान्नैकान्, भक्तिव्याजादचीकरत् । भेरी

स

तथा चक्रे यथा मेऽ-
प्रमुखवाद्यानि, मत्पुरोऽवादयत्तथा ॥ २२ ॥ तद्ध्वनि श्रवणात्त्रस्तो, महिषो मे कदर्थनाम् । तथा चक्रे यथा मेऽ-
भूत्, सर्वाङ्गं क्षतसन्ततिम् ॥२३॥ एकतो महिषः पापी, मामाऽऽकर्षति लेष्टुवत् । अन्यतः कौतुकी लोको, दत्ततालं
जहास च ॥ २४ ॥ अत्रान्तरे हहाकार-मुखराः शतशो द्विजाः । दधाविरे कुतोऽस्माकं, देवोऽयं तु विडम्ब्यते
॥ २५ ॥ श्रेष्ठिराज ! विमुञ्चैनं, विलम्बः क्षमते नहि । इत्यादि द्विजलोकानां, वहूक्ते सोऽब्रवीत्तदा ॥ २६ ॥ नाश्न-
न्त्यभक्ष्यं भो लोकाः !, सुरा अमृतभोजिनः । क्रीडामात्रमिदं तेषां, जीवहिंसाविधापनम् ॥ २७ ॥ इत्याख्याय स
लोकानां, द्विजानां च कदाग्रहात् । अमोचयद्यमसुखा-दिव मां सैरभात्ततः ॥२८॥ ततो मे मण्डिता मूर्त्तिः, प्रासादे
ब्राह्मणोत्तमैः । एवं मे महिमा सर्वो, ध्वस्तोऽनेन दुरात्मना ॥२९॥ मा कार्षीरसमाधिं त-न्मौनमेव समाचर । निःशूके नि-
र्दये पुंसि, देवा अपि हतौजसः ॥३०॥ देवी स्वस्थानकं प्राप्ता, सीहडोऽन्यन्तरोऽपि सः । तत्कुटुम्बं परित्यज्य, रेमेऽन्यत्र
निजेच्छया ॥ ३१ ॥ सम्यक्त्वमेवं चिरमेष पालयन्, प्रबोधयन् भद्रकजन्तुसन्ततीः । प्रभावयंश्चार्हतशासनं
क्षमा-ल्लोकद्वयेऽप्यद्भुतसौख्यभागभूत् ॥ ३२ ॥

इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे तृतीय उपदेशः ॥ ३ ॥

---

धर्म्मे प्रधाना यतना मनीषिभिः, प्ररूपिता सा गृहिणस्तु दुर्लभा ।
तथापि तस्यां यतमान आस्तिकः, स्यात्सौख्यभाक् सा मृगसुन्दरी यथा ॥ १ ॥

श्रीषेणः श्रीपुरे राजा, राजेव जनवत्सलः । तत्पुत्रो देवराजोऽभूद् , देवराज इवापरः ॥ १ ॥ जन्मप्रभृति तस्याङ्गे, दुष्टः कुष्ठामयोऽभवत् । कृताः प्रतिक्रिया नैकाः, अफलाः किन्तु जज्ञिरे ॥ २ ॥ जातानि सप्तवर्षाणि, राज्ञाऽन्येद्युः पुरान्तरे । पटहोद्घोषणापूर्व–मित्यश्रावि जनोऽखिलः ॥ ३ ॥ व्याधिं यो मम पुत्रस्य, पण्डितोऽपण्डितोऽपि वा । अपनेष्यत्यसौ भावी, राज्यार्द्धस्थितिभाजनम् ॥ ४ ॥ लक्ष्मीवती यशोदत्त–व्यवहारिसुताऽभवत् । तत्र धर्म्मरता शीले, विशिष्य तु कृतादरा ॥ ५ ॥ निजशीलपरीक्षायै, निवार्य पटहस्तया । स्वहस्तस्पर्शमात्रेण, स कुमारः पटू-कृतः ॥ ६ ॥ कुमारेण समं तस्या–स्ततः पाणिग्रहोत्सवः । समजायत हस्त्यश्व–रथदानादिपूर्वकम् ॥ ७ ॥ तं कुमारं न्यस्य राज्ये–ऽवसरे स महीपतिः । स्वीचकार परिव्रज्यां, कालज्ञा उत्तमा यतः ॥ ८ ॥ देवराजोऽपि साम्राज्यं, स्वाराज्यमिव पालयन्, अन्यदा पुट्टिलाचार्यां–स्तत्र प्राप्तानवन्दत ॥ ९ ॥ पप्रच्छ च प्रभो ! कस्माद् , व्याधिर्मे सप्त-वार्षिकः । कथं चास्याः करस्पर्श–मात्रादप्येष निष्ठितः ? ॥ १० ॥ प्राहुः श्रीगुरवो राजन् !, प्राग्भवे श्रेष्ठिपुङ्गवः । देवदत्त इति ख्यात–श्चत्वारस्तस्य सूनवः ॥११॥ गोपा–देपा–सिवा–शूरा–संज्ञा मिथ्यात्ववासिताः । चतुर्थेन त्वया तेषु, कपटश्राद्धताजुषा ॥ १२ ॥ परिणीता श्राद्धसुता, या नाम्ना मृगसुन्दरी । आबाल्यादपि तस्यास्तु, विद्यतेऽ-यमभिग्रहः ॥ १३ ॥ पूजयित्वा जिनं देवं, संयतान् प्रतिलाभ्य च । भोक्तव्यमेकशो रात्रौ, न भोज्यं च कदाचन ॥ १४ ॥ सम्भूय तेऽन्यदा प्राहु–स्तां नवोढामिति क्रुधा । अरे ! पाखण्डमुत्सृज्य, गृहाचारं समाचर ॥ १५ ॥ नार्च-

नीयो जिनो दानं, न देयं व्रतिनां त्वया । रजन्यां भोजनं कार्य—मन्यथाऽस्मद्गृहाद्व्रज ॥ १६ ॥ सा त्विदं जात्वनिच्छन्ती, मनसाऽपि महार्हती । जातोपवासत्रितया—ऽप्राक्षीच्छ्रीमद्गुरूनिति ॥ १७ ॥ किं कुर्वे ? धर्म्ममेतेभ्यः, कर्त्तुं नाहं लभे विभो ! । श्रीसिद्धान्तमथाऽऽलोक्य, तेऽपि तामेवमभ्यधुः ॥१८॥ पञ्चतीर्थीपञ्चसाधु—प्रणतिप्रतिलाभनैः । यादृशं प्राप्यते पुण्यं, भद्रे ! तादृशमाप्यते ॥ १९ ॥ चुल्हकोपरि निश्छिद्र—पृथुवस्त्रस्य बन्धनात् । आकर्ण्येति गता गेहं, तथैव कुरुते स्म सा ॥ २० ॥ युग्मम् ॥ अथ चन्द्रोदयं दृष्ट्वा, वधूटीं श्वशुरोऽब्रवीत् । किमिदं कार्मणं पापे !, स्वकुलक्षितये कृतम् ? ॥ २१ ॥ सा प्राह ननु जीवानां, रक्षणार्थोऽयमुद्यमः । तद्वचोऽमन्यमानेन, पत्या प्रज्वालितः स तु ॥ २२ ॥ पुनस्तया बबन्धेऽसौ, तेनाऽज्वालि तथैव सः । एवं सप्त तया बद्धाः, ज्वालिताश्च दुरात्मना ॥२३॥ अवादीत् श्वशुरः क्रुद्धो, गच्छ रे ! स्वपितुर्गृहम् । साऽप्यवोचदहं प्राप्ता, सकुटुम्बा भवद्गृहे ॥ २४ ॥ तथैव प्रेषणीयाऽहं, नूनं याम्यन्यथा कथम् ? । सज्जीवभूवुः सर्वेऽपि, तस्याः सम्प्रेषणाय ते ॥२५॥ मार्ग्गे स्वकीयेनैकेन, भुक्त्यर्थं ते निमन्त्रिताः । रात्रौ वध्वा अभुक्तत्वा—न्न भुक्ताः श्वशुरादयः ॥ २६ ॥ निष्पन्नं रसवत्यादि, बुभुजे तत्कुटुम्बकम् । ममार विषमिश्रत्वा—दाहारस्याखिलं च तत् ॥ २७ ॥ यावत्ससम्भ्रमाः प्रातः, पश्यन्ति श्वशुरादयः । तावत्पतितमैक्षन्त, व्यापन्नं तत्र पन्नगम् ॥ २८ ॥ नूनमेष भ्रमन्नूर्ध्वं, धूमेन व्याकुलीकृतः । पपात धान्यस्थाल्यन्त—रिति निश्चिक्यिरे च तैः ॥ २९ ॥ हहा ! चन्द्रोदयाभावा—दनर्थोऽयं महानभूत् । वध्वा एव प्रसादेन, पुनरुज्जीविता वयम्

॥ ३० ॥ मेनिरे भक्तिनम्रास्ते, वधूं श्रीदेवतामिव । सम्मान्य स्वं गृहं निन्युः, श्रावकत्वं च भेजिरे ॥ ३१ ॥ भद्राः ! पञ्चशतव्याधै—र्यावत् पापं विधीयते । तावचन्द्रोदयाऽवन्धे, गृहिणो ज्ञानिनो जगुः ॥ ३२ ॥ इत्यादि तस्याः शिक्षा-या—मायुक्तास्तेऽभवंश्चिरम् । तस्यास्तु यः पतिस्तत्र, स त्वमत्र नृपोऽभवः ॥ ३३ ॥ जीवस्तु मृगसुन्दर्याः, सेयं भार्या तवाऽजनि । यस्याः प्रभावतो व्याधि—र्गतस्ते सप्तवार्षिकः ॥ ३४ ॥ सप्तशो ज्वालनाच्चन्द्रो—दयानां सप्तवार्षिकः । कुष्ठरोगोऽभवत्प्राच्यं, नान्यथा यद्यथाकृतम् ॥ ३५ ॥ इति श्रुत्वा जातजाति—स्मृती तौ दम्पती सुते । राज्यं न्यस्य परिव्रज्य, सुगतिं च क्रमाद्गतौ ॥ ३६ ॥ इति जीवदयाफलं बुधाः !, अवधार्य स्वहृदि स्पृहा यदि । शिवशर्मणि तद्विधीयतां, स्वमनस्तत्र कठोरतोज्झिताः ! ॥ ३७ ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे चतुर्थ उपदेशः ॥ ४ ॥

विचार्य वाच्यं वचनं हितं मितं, न कर्कशं क्वापि निगद्यते बुधैः ।
अप्येकशः प्रोक्तकठोरवाक्यतो, न किं विगुप्तौ जननी सुतावपि ॥ १ ॥
छिनद्मि हस्तौ चरणौ च लोचने, निष्काशयामि त्वमरे ! म्रियस्व वा ।
इत्यादयः कर्कशवाक्परम्परा—स्त्याज्या बुधैर्दुर्गतिमार्गदीपिकाः ॥ २ ॥

ताम्रलिप्तीपुरी ताम्र—मयवप्रविराजिता । तत्रेभ्यो रतिसाराह्वो, वन्धुला तस्य च प्रिया ॥ १ ॥ तयोर्वन्धुमती

पुत्री, प्रकृत्योद्भटवेषभाक् । सौवर्णसर्वाभरणा, श्रेष्ठिनोऽत्यन्तवल्लभा ॥ २ ॥ तां प्रत्याह पिता वत्से !, मा कार्षीर्वेषमुद्भटम् । नेदृशो वणिजां भाति, सा तथाऽपि न तिष्ठति ॥ ३ ॥ भृगुकच्छपुरात्तत्र, वाणिज्यार्थमुपेयुषा । बन्धुदत्तेन साऽन्येद्युः, परिणीता सदुत्सवैः ॥४॥ पुनः प्रभूतलाभार्थी, तां तत्रैव विमुच्य सः । रत्नद्वीपं प्रति प्रास्थात्, पोतमारुह्य वारिधौ ॥ ५ ॥ कियत्यपि व्यतिक्रान्ते, भूभागे तस्य वाहनम् । आहन्यमानं कल्लोलै-र्भङ्गमाप क्षणादपि ॥ ६ ॥ अवाप्य फलकं चैकं, बन्धुदत्तस्तदाऽम्बुधिम् । लग्नस्तरीतुं वातेन, प्रेरितश्च तटेऽलगत् ॥ ७ ॥ निभालयति दिक्चक्रं, यावदुद्भ्रान्तलोचनः । तावत्तन्नगरोद्याने, प्राप्तमात्मानमैक्षत ॥ ८ ॥ अहो ! दैवगतिः केयं ?, लज्यते यत्र मानवैः । ईदृक्षोऽहं कथं गन्ता ?, तत्र श्वशुरमन्दिरे ॥ ९ ॥

स्त्रीपीहर नरसासरउ, संजमियां सहवास । एत्रिण्हइ अलखामणां, जइ को करइं तपास ॥ १ ॥

अतर्कितानि सौख्यानि, दुःखान्यपि शरीरिणाम् । भवति तदलं क्लेश-हेतुना चिन्तयाऽनया ॥ १० ॥ विचिन्त्येति स्थितो देव-कुले ज्ञापितवानसौ । श्वशुरस्य गृहे स्वस्य, तत्र प्राप्त्यादि केनचित् ॥ ११ ॥ श्रुत्वा जामातृवार्त्तां तां, मनःसन्तापकारिणीम् । आः ! किमेतदिति श्रेष्ठी, प्रोच्चरन् सहसोत्थितः ॥ १२ ॥ यावत्तदन्तिके याति, तावदस्तङ्गतो रविः । उत्सूरत्वात्कुटुम्बेन, वारितः स्वगृहे स्थितः ॥ १३ ॥ ब्राह्मे मुहूर्त्ते जामातृ-मिलनाय चचाल सः । आदाय वस्त्राभरण-प्रभृत्यवसरोचितम् ॥ १४ ॥ सौवर्णवलयव्यूहैः, शोभमानभुजालता । स्वपतिं वीक्षितुं

वन्धु–मत्यपि प्रस्थिता सह ॥ १५ ॥ श्रेष्ठिनः पृष्ठिगामिन्या–स्तस्याः कोऽपि करौ तदा । चिच्छेद तस्करो लुब्धः, प्राकृतं कर्म्म नान्यथा ॥ १६ ॥ सञ्जाते तुमुले तत्र, प्रासास्तलवरादयः । ज्ञातस्वरूपास्तच्चौर–पदैरेव दधाविरे ॥ १७ ॥ श्रेष्ठी पश्चाद्गतो गेहे, प्रभूतो मिलितो जनः । उच्चरन्कर्म्म कर्मेति, विदधे शोकसङ्कथाम् ॥ १८ ॥ इतश्च चौरोऽप्यासन्न–प्रासांस्तान्वीक्ष्य विह्वलः । तद्देवकुलमायातः, सुप्तः प्रागस्ति यत्र सः ॥ १९ ॥ लोप्त्रं तस्यान्तिके मुक्त्वा, काकनाशं ननाश सः । भटैश्चौरोऽयमेवेति, ज्ञातं तद्वस्तुदर्शनात् ॥ २० ॥ निर्विलम्बं निर्विचारं, शूलाया-मधिरोपितः । स तैरिति विडम्ब्यन्ते, कर्मभिः के न जन्तवः ? ॥ २१ ॥ अथ श्रेष्ठी सुताशोकं, कृत्वा प्रासस्तदन्ति-कम् । यावत्तावदयं प्राणै–रुज्झाञ्चक्रे खलैरिव ॥ २२ ॥ दृष्ट्वा तादृगवस्थं तं, तान् जगाद स दुःखितः । भवद्भिः किं कृतं ? भो भोः !, जामातैव हतो मम ॥ २३ ॥ तद्दुःखदुःखितास्तेऽपि, तत्स्वरूपे निवेदिते । सर्वे स्वस्वगृहं प्रासा–श्चिन्तयन्तो भवस्थितिम् ॥ २४ ॥ जामातुस्तनयायाश्च, तादृक् तत्कर्म्मवैशसम् । विज्ञाय रतिसारोऽभूद्, धर्म्मसार-स्ततः परं ॥ २५ ॥ अन्यदा सुयशास्तत्र, चतुर्ज्ञानी समागतः । श्रेष्ठी तद्देशनां श्रुत्वा–ऽपृच्छत्प्राच्यभवं तयोः ॥ २६ ॥ ज्ञानी प्राह पुरा शालि–ग्रामेऽभूत्काऽपि दुर्गता । महेला बालकसुता, कुटुम्बाद्यैः परिच्युता ॥ २७ ॥ सा महेभ्यगृहे नीच–कर्म्माण्युदरपूर्त्तये । करोति वत्सरूपाणि, चारयत्यङ्गजः पुनः ॥ २८ ॥ अन्यदा वत्सरूपाणि, चारयित्वा सुतो गृहे । प्रासस्तज्जननी क्वाऽपि, कार्ये सक्ता तु नागता ॥ २९ ॥ बभूव महती वेला, स

बालः क्षुधितो भृशम् । गृहप्रासां च तामूचे, साधिक्षेपमिदं वचः ॥ ३० ॥ शूलायां त्वमरे रण्डे !, क्षिसाऽभूः
किमियच्चिरम् ?। बुभुक्षापीडितं मां किं, न जानासि ? विचेतने ! ॥३१॥ तथैव साऽपि प्रत्यूचे, छिन्नौ किं ते करा
विमौ ?। यदत्र सिक्कके भोज्यं, त्वदर्थं सज्जितं मया ॥ ३२ ॥ कस्मान्न जगृहे ? मूर्ख !, दोषः को मेऽवशत्वतः ।
एवं ताभ्यां चिरं चक्रे, कलहो बहुलस्तदा ॥ ३३ ॥ अनालोचिततत्पापौ, तौ मातृतनयौ तव । सुताजामातरौ
जातौ, तदिदं भवनाटकम् ॥ ३४ ॥ येन यादृग्वचः प्रोक्तं, स तादृक् फलमश्नुते । ततस्तत्त्वमिदं श्रेष्ठिन् !, कार्यो
वचनसंवरः ॥ ३५ ॥ श्रुत्वेति तस्य सविधे व्रतमाप्य साधोः, श्रेष्ठी बभूव सुखभाग् रतिसारनामा । भ्रान्तौ च तौ
भवमनन्तमिति प्रबुध्य, वाच्यं विचार्य वचनं मधुरं मितं च ॥ ३६ ॥

॥ इति उपदेशसप्ततिकायां पञ्चमेऽधिकारे पञ्चम उपदेशः ॥ ५ ॥

---

पूजात्रयावश्यकयुग्मरूपा, यो लङ्घयत् प्रत्यह पञ्च वेलाः ।
सत्यापयेत्स प्रवरस्तनूमान्, बुधैर्जगत्सिंह इव प्रशस्यः ॥ १ ॥
श्रीपीरोजसुरत्राण–सभाशृङ्गारकारणम् । जगत्सिंह इति श्रेष्ठी, सञ्जातो योगिनीपुरे ॥१॥ अखिलेऽपि पुरे ख्यातः,
स एकः सत्यवादिनाम् । असत्यवादिना प्रायो, न प्रतिष्ठा ह्यवाप्यते ॥ २ ॥ स्याद्वह्नावपि शीतत्वं, पवनेऽपि स्थिरा-
त्मता। तथाऽपि प्रेक्ष्यते तत्र, जातु नाऽसत्यवादिता ॥ ३ ॥ तस्येति ख्यातिमाकर्ण्य, परीक्षायै कृतादरः । अपृच्छद्-

र्जनान् भूपो, रहस्तन्मर्मवेदिनः ॥४॥ भो भोः ! निगद्यतामस्य, श्रेष्ठिनोऽस्ति कियद्धनम् ?। तेऽपि द्रोहपरा ऊचु-र्लक्षाः ससतिसंख्यया ॥ ५ ॥ कियद्दिनान्तरे भूप-स्तमुवाच कियद्धनम् । विद्यते तव ? सोऽप्याह, विमृश्य कथयिष्यते ॥ ६ ॥ दिने द्वितीये सम्भाल्य, गृहोपस्करमाह सः । अभ्यष्ट ८४ लक्षसंख्या मे, सन्ति वित्तस्य भूपते ! ॥ ७ ॥ एष प्रागुक्तसंख्यातो-ऽधिकोक्त्या सत्य एव यत् । प्रायः स्वद्रव्यसंख्यायां, स्तोकः स्यात्सत्यवादकः ॥८॥ ततस्तुष्टेन भूपेन, लक्षषोडशकार्प्पणात् । कृतः कोटीध्वजः श्रेष्ठी, सत्यस्याहो ! फलं कियत् ? ॥ ९ ॥ एकदा दर्शयामास, रत्नं तस्यार्कसोदरम् । भूपः स्वकोशादानाय्य, तं प्रत्येवमुवाच च ॥ १० ॥ एतस्य सदृशं रत्नं, किमन्यद्विद्यते भुवि ?। सोऽप्याह किं धरामध्ये, पातसाहद्वयं भवेत् ? ॥ ११ ॥ तद्वचोरञ्जितस्तस्या-ऽर्पयत्तद्रत्नमुत्तमम् । न्यासार्थं नहि भेदः स्याद् ,द्वयोः प्रीतिः स्थिरान्तरा ॥ १२ ॥ इति प्रीत्या तयोः काले, कियत्यपि गते सति। केनापि हेतुना राजा, रुष्टस्तं प्रत्यथैकदा ॥ १३ ॥ सम्पदो महतामेव, तेषामेव स्युरापदः । नीचास्तादृग्विधा एव, चन्द्रधिष्ण्यनिदर्शनात् ॥ १४ ॥ शीर्षस्य पुष्पाभरणं, मुण्डनं च विधीयते । न चयापचयौ स्यातां, भ्रुवोः केशेषु कर्हिचित् ॥ १५ ॥ ततस्तं श्रेष्ठिनं भूपो, गुप्तिवेश्मन्यधारयत् ।स्वकीयं तस्य रक्षार्थं, सेवकं च न्ययोजयत् ॥ १६ ॥ तदा च श्रेष्ठिनः पञ्च-वेलाधर्म्मव्यतिक्रमः । दोदूयाक्तन्न तु क्ष्माप-स्थापनात्परतन्त्रता ॥ १७ ॥ सेवकस्य ततस्तस्य, रहः सौवर्णटङ्ककम् । दापयित्वा निजाः पुण्य-वेलाः साधितवानसौ ॥ १८ ॥ यतो भवे भवे लक्ष्मीः, प्राप्यते भववृद्धिकृत् । न तु

श्रीधर्म्मसामग्री, क्षयमेति भवो यथा ॥ १९ ॥ इत्येकविंशतिदिनां–स्तावत्टङ्ककदापनात् । स्वकृत्यान्यकरोद्धर्म्मो–दरो लोकोत्तरो ह्यसौ ॥ २० ॥ प्रसन्नोऽथ सुरत्राण–स्तं निजाङ्गविभूषणैः । पञ्चवर्णदुकूलैश्च, पञ्चशः पर्यधापयत् ॥ २१ ॥ ततश्चामन्दवाद्यौघै–र्बहुलोकैश्च संयुतः । श्रेष्ठी स्वगृहमायातो, ददानोऽर्थितमर्थिषु ॥ २२ ॥ क्रमेण विजने जाते, रक्षकोऽपि स टङ्ककान् । भूपादिभीतः प्रारेभे–ऽर्प्पयितुं गृह्यतामिति ॥ २३ ॥ श्रेष्ठ्यप्युवाच तं भद्र !, मया तेऽमी समर्पिताः । तत्त्वमेतान्यथाकामं, दत्स्व भुंक्ष्व सुखी भव ॥ २४ ॥ यत्ते प्रसादतो धर्म्मोऽ–नुष्ठानं विदधे मया । एकोऽपि धर्म्मसम्बन्धी, क्षणः कोट्यापि दुर्लभः ॥ २५ ॥ तेषु पञ्च मयैकेन, टङ्ककेन कृतार्थिताः । तत्तेऽधिकमपि द्रव्यं, दीयते गृह्यते कथम् ? ॥ २६ ॥ इति प्रोच्य पुनर्दान–पूर्वं तं विससर्ज सः । औचित्याचरणे सन्तः, किं मुह्यन्ति कदाचन ? ॥ २७ ॥ सपादलक्षक्ष्मापालो–ऽन्यदा सेवार्थमागतः । सुरत्राणपुरो वस्तु–द्वयं ढौकितवानिदम् ॥ २८ ॥ चान्दनं शकलं मुक्ता–फलद्वन्द्वं च निर्मलम् । दृष्ट्वा तदल्पं भूपस्तु, क्षणं रुष्ट इवाऽभवत् ॥ २९ ॥ पश्यन्ति सभ्याः सर्वेऽपि, न तु कोऽपि परीक्षयेत् । दध्यौ सपादलक्षीयो–ऽप्यहो ! मूर्खा अमी जनाः ॥ ३० ॥ अथोवाच जगत्सिंहो, द्वयमेतदमूल्यकम् । चान्दनस्याऽस्य खण्डस्य, पूर्वं माहात्म्यमुच्यते ॥ ३१ ॥ अग्नितप्तं शतमण–प्रमाणमपि जायते । एतत्खण्डेऽपि मध्यस्थे, तैलं हिमकणोपमम् ॥ ३२ ॥ किञ्च पाण्मासिकेनापि, ज्वरेण विधुरीकृतः । घृष्टैतच्छकलं पीत्वा, भवेज्जन्तुर्निरामयः ॥ ३३ ॥ कौतुकं मौक्तिकद्वन्द्व–स्यापि देवाऽवधार्यताम् । विक्रीयैकतरद्

द्वैती—यीकं ग्रन्थौ निबध्यते ॥ ३४ ॥ अवश्यं तच्च सन्ध्यायां, मिलत्युत्सुकमित्रवत् । श्रुत्वेति विस्मितो भूपः, परीक्षां कृतवांस्तयोः ॥ ३५ ॥ कथं वेत्सीति भूपेन, पृष्टः श्रेष्ठी पुनर्जगौ । आबाल्याभ्यासतो वस्तु—परीक्षा शिक्षिता मया ॥ ३६ ॥ एवं हि पुण्यविषये, परीक्षा युज्यते सताम् । बाह्यवस्तुपरीक्षासु, मोदते न मनो मम ॥ ३७ ॥ इत्थं तदुक्तितः प्रीतः, प्रसादं स्फीतमातनोत् । तस्मै सपादलक्षीय—क्ष्मापाय च स भूमिराट् ॥ ३८ ॥ एवं पञ्चाऽऽराधयन्पुण्यवेलाः, यावज्जीवं सत्यभाषां च जल्पन् । जैनं जाग्रच्छासनं भूरिकालं, चक्रे श्रेष्ठी श्रीजगत्सिंहनामा ॥३९॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे षष्ठ उपदेशः ॥ ६ ॥

श्लाघ्यस्तदीयतनयोऽपि वणिग्वरेण, रुद्धोऽपि यो निजपितुः शपथं न चक्रे ।
श्रीदवतीर्थगुरुराड्जनकादिकानां, कार्ये महत्यपि यतः शपथो न कार्यः ॥ १ ॥

जगत्सिंहमहेभ्यस्य, तनयश्चतुराशयः । नाम्ना मदनसिंहोऽभूत्, तथैव ख्यातिमान् जने ॥ १ ॥ खुरसाणमहास्थान—वास्तव्यो धनदाभिधः । प्रीतिपात्रमभूद्वस्तु—पतिस्तस्य पितुः पुरा ॥ २ ॥ दिवंगते जगत्सिंहे, सोऽन्यदा योगिनीपुरे । आगतो व्यवसायार्थं, तद्गृहेऽप्याजगाम च ॥ ३ ॥ कुटुम्बक्षेमनिर्वाह—व्यवसायादिपृच्छया । तद्वत्तस्य सुतेऽप्येष, व्यवहारचिकीरभूत् ॥ ४ ॥ परं तस्य परीक्षार्थं, स उपायमिति व्यधात् । ऐहिकाऽमुष्मिके कार्ये, परीक्षा युज्यते सताम् ॥ ५ ॥

कुलकसवट्टइं जाणीयइ, जइ उपकार करंति ॥ १ ॥
सोनउं चंदन सप्पुरिस, आपण पीड खमंति । कुलकसवट्टइं जाणीयइ, जइ उपकार करंति ॥ १ ॥
ध्यात्वेति तं प्रति प्राह, मायया कृत्रिमादरः । मया तव पितुः पार्श्वा-लभ्यं यत्तत्समर्प्पय ॥ ६ ॥ यतो
बहूनि वर्षाणि, त्वत्पित्रा सह निर्म्मितः । व्यवहारो मया तेन, लभ्यं देयं च बह्वपि ॥ ७ ॥ तुरङ्गमशतं दत्त्वा, देयं निर्वा-
लितं पुरा । औत्सुक्यात्स्वपुरे प्राप्तं, शेषं लभ्यं त्विह स्थितम् ॥८॥ कियल्लभ्यमिति प्रोक्ते, सोऽब्रवीज्जीर्णनाणकैः । लभ्याः
सहस्रा द्वात्रिंश-द्यदि युक्तिस्तदाऽर्प्यतां ॥ ९ ॥ सुतोऽप्याह पितुर्देयं, स्तोकमप्यथवा बहु । वहिकायां यथादृष्टा-ऽभि-
धानं प्रददे मया ॥ १० ॥ परं तत्र भवन्नाम, क्वाऽपि नाऽऽलोकितं मया । अपि लभ्यं कथं लभ्यं ?, विना लिखितभा-
षितम् ॥ ११ ॥ पुनर्जगाद तं श्रेष्ठी, चित्ते हृष्टोऽपि रुष्टवत् । अरे ! देयं पितुः पुत्रो, दत्ते काऽत्र विचारणा ॥ १२ ॥
श्रेष्ठिन् ! मुधा प्रयासोऽयं, भवद्भिः क्रियते कुतः ? । साक्षिणं लिखितं वाऽपि, विना लभ्यं न लप्स्यते ॥ १३ ॥ गतः
श्रेष्ठी सुरत्राण-सभायां प्राह तत्पुरः । देव ! विज्ञप्यमस्त्येकं, यद्यत्र विजनं भवेत् ॥ १४ ॥ राज्ञा तथाकृते सोऽवक्,
कृत्रिमः कलहो मया । प्रारब्धोऽस्ति परीक्षार्थं, जगत्सिंहाङ्गजन्मना ॥ १५ ॥ यत्तत्प्रलपने दोषो, न देयो मम
कश्चन । इति प्रच्छन्नमाख्याय, सर्वाऽध्यक्षं ततोऽब्रवीत् ॥ १६ ॥ जगत्सिंहान्तिके राजन् !, मया लभ्यमभूत्पुरा ।
तत्सुतो नाऽर्प्पयत्येप, क्रियते किं ? त्वमादिश ॥१७॥ नृपाऽऽहूतः सभामेत्य, स्वस्वरूपं सुतो जगौ । सोऽप्यात्मीयं ततो
जातो, विवाद उभयोरपि ॥ १८ ॥ प्राह वस्तुपतिर्लभ्यं, न चेत्त्वत्पितुरन्तिके । सर्वेषां पश्यतां तर्हि, त्वं तातश-

पथं कुरु ॥ १९ ॥ सधर्यमवदत् पुत्रो, न तातशपथं सृजे । गृह्णातु लभ्यमात्मीयं, सर्वस्वमथवा भवान् ॥ २० ॥ विक्रीणेऽहं कथं द्वात्रिं–शत्सहस्रैः स्वबीजिनम् ?। कोटीभिरुपकाराणा–मपि यो दुष्प्रतिक्रियः ॥ २१ ॥ केचिन्मूर्खाः निजपितु–र्गलस्य रुधिरस्य वा । कुर्वन्ति शपथांस्तेषां, गतिं जानाति केवली ॥ २२ ॥ यतः—

"सच्चेणवि अलीएणवि, चेइअसम्मं करेइ जो मूढो । हणिऊण बोहिबीयं, अणंतसंसारिओ होइ ॥ १ ॥"

इत्थं तदुक्तिमाकर्ण्य, सर्वे सभ्याः सविस्मयाः । तत्प्रशंसां वितन्वन्ति, सोऽपि वरतुपतिर्जगौ ॥ २३ ॥ वत्स ! त्वं धन्यमूर्द्धन्यो, यस्य साहसमीदृशम् । परीक्षेयं मया चक्रे, लभ्यं मेऽस्ति न किञ्चन ॥ २४ ॥ यतः कण्ठीरवापत्यं, भवेत्कण्ठीरवोपमम् । न सूर्यात्तामसी वृष्टि–र्न चाङ्गारमयी विधोः ॥ २५ ॥ इति तं श्लाघयित्वा स, जगत्सिंहपदे परे । निवेश्य तद्वत्तत्रापि, व्यवहारमतन्तनोत् ॥ २६ ॥ एवं मदनसिंहोऽपि, वल्लभोऽभून्नृपादिषु । तत्र तत्र प्रतिष्ठा स्यात्, यत्र यत्र गुणादरः ॥ २७ ॥ ग्लानीभूतं सुरत्राणं, मेदपाटागतोऽन्यदा । पोलाऽभिधो महावैद्यो, विदधे विगताऽऽमयम् ॥ २८ ॥ ततः प्रभृति राजादे–रपि मान्यो बभूव सः । रसाङ्गवेदी शास्त्रज्ञो, त्रिविधौषधयोगवित् ॥ २९ ॥ स नालिकेरनवकं, भनक्ति युगपद्बली । पूगीफलं च तस्यान्तः, स्वाङ्गुष्ठेन क्षिपत्यसौ ॥ ३० ॥ जानुकक्षाकफोणीना–मंसयोश्च द्विकं प्रति । निवेश्य चिबुके चैकं, चूर्णयत्येवमेव तत् ॥ ३१ ॥ सहाजनेन सार्द्धं सो–ऽन्यदा शालामुपागतः, लिङ्गिना क्रियमाणे च, व्याख्याने समुपाविशत् ॥ ३२ ॥ तत्राऽधिकारे कुत्राऽपि, तपोगच्छावही-

लनम्। चकारात्मस्तुतिं चैप, पोलाकोऽथावदत्तदा ॥ ३३ ॥ अरे वोत्कट! किं ब्रूपे?, न पश्यसि महाजनम्?। इत्युक्त्वा सहसोत्थाय, तं जघान चपेटया ॥ ३४ ॥ जातो रोपारुणो लिङ्गी, सुरत्राणसभां ययौ। वैद्योऽपि तत्र प्रासश्च, स्वस्ववृत्तान्तमूचतुः ॥ ३५ ॥ उभयोरपिमान्यत्वा-द्भूपो यावज्जगाद न। तावन्मदनसिंहोऽवग्, देव! काऽत्र विचारणा?॥ ३६ ॥ जिह्वा व्यापारितैकेना-ऽन्यश्च हस्तमवाहयत्। एकस्य दण्डेऽन्यस्यापि, दण्डस्तन्नोभयोरपि ॥३७॥ श्रुत्वेति हसितः स्वान्ते, सान्त्वयित्वा मृदूक्तिभिः। तावुभावपि राजेन्द्रः, स्वस्वस्थाने व्यसर्जयत् ॥ ३८ ॥ एवं यथा मदनसिंहमहेभ्य एपः, प्राणात्ययेऽपि शपथं स्वपितुर्न चक्रे। तेनार्हदादिविपये शपथो न कार्यः, सत्योऽप्यसत्य इह भव्यजनैर्विधिज्ञैः ॥ ३९ ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे सप्तम उपदेशः ॥ ७ ॥

---

हिंसा बुधैः प्राणवियो उच्यते, प्राणाश्च बाह्या द्रविणानि देहिनाम्।
हताश्च ते तेन हृतानि येन चा-ऽन्यस्वानि तक्ष्णोऽत्र निदर्शनं प्रिया ॥ १ ॥

सूदा-सूरा-सूण्टा-सोना-नामान इह समहिमानः। अभवन्निभ्याश्चतुरा-श्चत्वारस्तामलिप्तपुरे ॥ १ ॥ बृहत्कुटुम्बा द्रव्याढ्याः, प्रीतिभाजः परस्परम्। समानवयसो राज-सभाशृङ्गारहेतवः ॥ २ ॥ भद्रप्रकृतयः सर्वे-ध-

र्म्मकर्मसु लालसाः । अन्याऽन्यमित्यालोचन्ते, सृजन्ति स्माऽन्यदा रहः ॥ ३ ॥ आर्जितं द्रविणं भुक्ताः, भोगा जाताः सुतादयः । प्राप्तो मानो नृपादिभ्यो, नात्मकार्यं कृतं परम् ॥ ४ ॥ स्वस्थावस्थे शरीरेऽत्र, धर्म्मः कार्यो मनीषिभिः । आदीप्ते भवने कूप–खननं कः समाचरेत् ? ॥५॥ विमृश्येति स्वस्वगेह–चिन्तां स्वस्वाङ्गजेष्वमी । आरोप्य तीर्थयात्रायै, चेलुः संन्यासवेषिणः ॥ ६ ॥ पृथक् पृथग् लक्षमूल्य–रत्नगर्भाः विहङ्गिकाः । स्कन्धे दधानास्ते मार्ग–मुल्लङ्घन्ते शनैः शनैः ॥७॥ एकत्र नगरे प्राप्ता–स्तत्र सूत्रभृतो गृहे । भुक्त्वा भलापयित्वा च, तत्पत्न्यास्ता विहङ्गिकाः ॥८॥ मध्ये चतुष्पथं प्राप्ता–स्तत्रत्यक्षितिपाग्रतः । विधीयमानमैक्षन्त, नाटकं नाट्यकोविदैः ॥ ९ ॥ तदा च विजनं मत्वा, रत्नं वर्द्धकि-भार्यया । विहङ्गिकास्थं सूरस्य, हृतं तज्जीवितोपमम् ॥ १० ॥ अतिवाह्य दिनं तत्र, नाटके तेऽपि मन्दिरे । तत्रैव सायमायाताः, वासकं चावतस्थिरे ॥ ११ ॥ प्रातः समुत्थिताः स्वाः स्वाः, असम्भाल्य विहङ्गिकाः । स्कन्धे कृत्वा पुरश्चेलु–र्गङ्गायां ते क्रमाद्गताः ॥ १२ ॥ तत्र स्नानादिपुण्यानि, कृत्वा श्राद्धं चिकीर्षवः । क्रष्टुं प्रवृत्ताः स्वस्वानि, रत्नानि व्ययनेच्छया ॥ १३ ॥ सूरस्तदानीमात्मीयं, तदपश्यन्नुवाच तान् । बान्धवाः ! मम तद्रत्नं, हृतं केनाऽपि पापिना ॥ १४ ॥ एता विहङ्गिकाः प्रायः, सर्वदाऽप्यात्मसन्निधौ । अस्थापयामस्तत्कस्य, कार्या सम्भावनाऽत्र भोः ! ॥ १५ ॥ मिथो विमृश्य तां तेषा–मेकः प्राह निशम्यताम् । यदा वर्द्धकिगेहान्त–र्मुक्ता एता विहङ्गिकाः ॥ १६ ॥ तदाऽऽत्मनां तत्र नृत्ये, व्यग्राणां सूत्रभृद्गृहे । तद्भार्यैवाऽभवत्तेन, तस्याः सम्भाव्यते ह्यदः ॥ १७ ॥ सत्यं सत्यमिति

प्रोचु–रपरेऽपि त्रयस्ततः । सूरोऽवादीदहो ! कीदृक्, तस्याः पातकपाटवम् ? ॥ १८ ॥ हा ! निष्कारणवैरिण्या, महोद्वेगस्तया कियान् । कृतो ममेत्युरस्तापा–द्विलापानकरोद्वहन् ॥ १९ ॥ कथं श्राद्धविधिः कार्य–स्त्यागयागादयः कथम् ? । अन्यान्यपि हि पुण्यानि, क्रियन्ते निर्द्धनैः कथम् ? ॥ २० ॥ दध्यौ च स्वगतं यद्ये–तया दुःखं ममेदृशम् । कृतं तदाऽहमप्यस्याः, करिष्ये दुःखमुल्बणम् ॥ २१ ॥ विमृश्येत्याह सूरस्तान्, भो भोः श्रृणुत बान्धवाः ! । अहमत्र मरिष्यामि, विमोच्य करपत्रकम् ॥ २२ ॥ निदानेन भविष्यामि, सुतस्तस्याः सुरूपभृत् । भवे तत्राऽपि मर्त्तोऽस्मि, भूत्वा द्वादशवार्षिकः ॥ २३ ॥ एवं कृते च तस्याः स्यात्, महद्दुःखं हि नाऽन्यथा । कृते प्रतिकृतिं कुर्या–दिति शास्त्रेऽपि पठ्यते ॥ २४ ॥ परं तत्समये तत्र, युष्माभिरपि बान्धवाः ! । आगत्याऽयं व्यतिकरः, श्राव्यस्तस्याः सविस्तरम् ॥ २५ ॥ लात्वा तत्पार्श्वतो रत्नं, व्ययनीयमिहैत्य च । एतदर्थे च युष्माभि–र्दीयतां दक्षिणः करः ॥ २६ ॥ तदुक्तिप्रतिपत्तिं ते–ऽप्यूरीकृत्य गता गृहम् । तथैव साधयामास, सूरोऽपि मरणं तदा ॥ २७ ॥ तज्जीवस्तनयत्वेन, तस्याः कुक्षाववातरत् । व्यभिचारि निदानं नो, कृतकष्टानुमानतः ॥ २८ ॥ काले च तनयो जातः, कृतमाणिक्यनामकः । लालितः पालितो वृद्धिं, प्रापितः पाठितश्च सः ॥ २९ ॥ कन्यां रूपवतीं प्रौढ–कुलजां परिणायितः । कुटुम्बभारधौरेयो, जातो द्वादशवार्षिकः ॥ ३० ॥ अथ ते कृतसङ्केता–स्त्रयोऽपि व्यवहारिणः । प्रापास्तत्र पुरे प्राग्वद्यात्रायै निर्मितोद्यमाः ॥३१॥ तस्य सूत्रभृतो गेहे, तं पश्यन्ति कुमारकम् । वदन्ति च स एवाऽय–मित्यन्योऽन्यं हसन्ति

च ॥ ३२ ॥ अत्रान्तरे शिशोस्तस्य, चटितो दारुणज्वरः । आहूता बहवो वैद्याः, कृता नानाप्रतिक्रियाः ॥ ३३ ॥ तथाऽपि स मृतो बालः, स्यान्निदानं किमन्यथा । कृतः समस्तैरुद्वेगो,जनन्या तु विशेषतः ॥ ३४ ॥ तदा ते तामिति प्रोचु–र्भद्रे ! स्वकृतकर्म्मणः । भवेऽत्रैव फलं प्राप्तं, साऽवदत् किं मया कृतम्? ॥ ३५ ॥ गृहे तवामुके वर्षे, यात्रिकाः केचिदागताः । तेषामेकस्य किं रत्नं,त्वया वद हृतं न वा ? ॥३६॥ उक्ते सत्ये तया तेभ्यो, भीतया ते ततो जगुः । तस्य जीवेन ते दुःखं, दत्तं तद्दुःखदानतः ॥ ३७ ॥ पश्चात्तापपरा साऽपि, तेभ्यस्तद्रत्नमार्पयत् । तैरपि व्ययितं तीर्थे, गत्वा तस्य शिवेच्छया ॥ ३८ ॥ तेऽपि क्रमाद्भवमिमं कृतगेहदेह–त्यागाः कृशत्वमनयन्त तपोविधानैः । तन्माऽन्यमान्यजन-वित्तमपाहर त्वं, संतोषसौधरसमात्मगतं कुरुष्व ॥ ३९ ॥ इयं पौराणिकी वार्त्ता, मिथ्यादृग्जनतोचिता । तत्त्वज्ञानां हि जैनाना–मपराधेऽप्यविक्रिया ॥ ४० ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारेऽष्टम उपदेशः ॥ ८ ॥

---

विषयामिषलम्पटो जनः, सहतेऽत्रैव भवे विडम्बनाम् । यजमानविगोपितो यथा, लघुतां प्राप स तापसब्रुवः ॥ १ ॥

पुरा श्रीचम्पकपुरे, श्रेष्ठी श्रेष्ठगुणोच्चयः । चकोरनामा सञ्जात–श्चकोर इव कोविदः ॥ १ ॥ धर्म्मकृत्यरतोऽप्येष, तापसेषु परं सदा । कुरुतेऽत्यादरं धर्म्म–परीक्षा खलु दुर्लभा ॥ २ ॥ अन्यदा पर्वणि क्वाऽपि, तेनैकः कोऽपि तापसः ।

निमन्त्रितो गृहे भुक्त्यै, भोजयामास तं च सः ॥ ३ ॥ उदरंभरिणा तेन, भुञ्जानेन दुरात्मना। गौरवर्णं लम्बकर्णं, दृष्टं श्रेष्ठिसुताद्वयम् ॥ ४ ॥ आपादमस्तकं रम्यं, तद्रूपं तस्य पश्यतः। मार उज्जागरो जातो, निर्विवेका हि तादृशाः ॥ ५ ॥ यजमानपुरोऽवादी–द्भोजनानन्तरं जटी। प्रच्छन्नं निजशिष्येभ्यः, परित्यज्य त्रपामपि ॥ ६ ॥ कस्येदं तनया–द्वन्द्वं?, स प्राह भगवन्मम। तदिदं दीयतां मह्यं, गुरुभक्तो भवान् यतः ॥ ७ ॥ आत्मनो वल्लभं यत्त–न्निर्विचारेण चेतसा। गुरुभ्यो देयमेकान्त–मक्षयं हितमिच्छुना ॥ ८ ॥ श्रेष्ठी श्रुत्वेति तं प्राह, भगवन्! भवतामिदम्। नेदृग् युक्तमपि ध्यातुं, किं पुनर्जल्पितुं मुखे ?॥ ९ ॥ रुष्टो गुरुस्तमाचष्ट, रे! मामप्यवमन्यसे। मन्यस्व मद्वचो नोचे–द्विरूपं ते भविष्यति ॥ १० ॥ अन्तःक्रुद्धोऽपि तं श्रेष्ठी, साम्ना पुनरिदं जगौ। किमप्यदेयं मे नास्ति, विशिष्य तु भवादृशाम् ॥ ११ ॥ परं प्रकटतः कन्या–प्रदानं मे तवाऽपि च। भावि त्रपाकरं तेन, भवन्तो यान्तु सम्प्रति ॥ १२ ॥ अत्राऽऽस्ते या नदी तस्यां, मञ्जूषोपायतः प्रभो!। इमे द्वे ढौकयिष्यामि, कुर्वीथा माऽत्र संशयम् ॥१३॥ इति श्रुत्वा जटी कुण्ठ–मतिः प्राप मठं निजम्। तद्ध्यान एव तां रात्रि–मनैषीदेष पापधीः ॥१४॥ यजमानेन तेनाऽथ, मर्कटी–द्वितयं वनात्। आनाय्य मध्ये क्षिप्त्वा च, पेटा नद्यां प्रवाहिता ॥ १५ ॥ तदा च तापसोऽप्यात्म–विनेयानित्यभाषत। अद्य मे त्रिदशः कोऽपि, रात्रौ तुष्टोऽब्रवीदिति ॥ १६ ॥ प्रातर्नद्यां वहन्ती या, मञ्जूषाऽभ्येति सा त्वया। नेया मठान्तस्तत्रत्यं, सारं ग्राह्यं हितं तव ॥ १७ ॥ श्रुत्वेति जहृषुः शिष्याः, गुरोः श्लाघां वितेनिरे। धन्यस्त्वमेव

यस्येत्थं, वशिनस्त्रिदशा अपि ॥ १८ ॥ अथ प्रभाते मञ्जूषा, सा प्राप्ता तन्मठान्तिके । आनाय्य तां च शिष्येभ्यो, मठमध्ये व्यमोचयत् ॥ १९ ॥ ददौ च शिक्षां शिष्येभ्यः, प्रच्छन्नं तापसः पुनः । किमप्यस्यां रहस्यं भोः !, भावि तत् श्रूयतां वचः ॥ २० ॥ एतामुद्घाटयिष्यामि, मठान्तर्विधिपूर्वकम् । कपाटसम्पुटं दत्त्वा, ध्यानमालम्ब्य च स्थिरम् ॥ २१ ॥ विना मदुक्तं नोद्घाट्यौ, कपाटौ हि विनेयकाः ! । असमग्रो विधिर्येन, योगिनामप्यनर्थकृत् ॥ २२ ॥ तथेति प्रतिपन्ने तै–र्मठान्तर्गतवान् गुरुः । मनोरथेन महतो–द्घाटयामास तामयम् ॥ २३ ॥ तदा तत्संमुखं ते द्वे, निर्गत्योच्छलिते द्रुतम् । मर्कट्यौ क्रूरनखरे, क्षुधिते चञ्चले भृशम् ॥ २४ ॥ ताभ्यां तदीया जगृहे, नासिका सरलोन्नता । कपोलौ विपुलौ छिन्नौ, भालं च शकली कृतम् ॥ २५ ॥ परान्नपीवरं तस्यो–दरमप्याशु दारितम् । भक्षितो भक्षितो शिष्याः!, इति कोकूयते ततः ॥ २६ ॥ सोढा स एकः कष्टानां, ते द्वे तु क्षुधिते भृशम्। शिष्यैर्नोद्घाट्यते द्वारं, दुःखपारः कथं भवेत्? ॥ २७ ॥ बहिः स्थितास्तु ते शिष्याः, विमर्शमिति कुर्वते । उपसर्ग्गं करोत्येष, नूनं कोऽपि गुरोः सुरः ॥ २८ ॥ चिरादुद्घाटिते द्वारे, स ताभ्यां सह निर्गतः । निर्यद्रक्तप्रवाहेण, रक्ताद्रिरिव मूर्त्तिमान् ॥२९॥ भगवन्! किमिदं जातं, पूज्यानां भवतामपि । इति पृष्टे गुरुः स्माह, तद्वृत्तं तथ्यमेव सः ॥३०॥ सोपहासं स कारुण्यं, सदैन्यं शैक्षकाजगुः । निर्म्मिता यजमानेन, भक्तिर्गुर्वनुरूपिणी ॥ ३१ ॥ एतस्योचितमेवेदं, स्वाचारं परिमुञ्चतः । भस्मनैव हि रुद्रस्य, पूजा स्यान्न तु चन्दनैः ॥३२॥ काले गुरुः पटूभूतो, यजमानेन बोधितः । भगवन्नीदृशं कर्म, न

तापसजनोचितम् ॥ ३३ ॥ शिक्षयित्वेति तं प्राप्तो, यजमानो निजं गृहम् । तापसोऽपि चिरं दीक्षां, तापसीं पर्यपालयत् ॥३४॥ यदि शिवनगरयियासा, भवे जिहासा च वो भवेद्भव्याः !। तदमी विषमा विषयाः, किम्पाकफलोपमास्त्याज्याः ॥ ३५ ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे नवम उपदेशः ॥ ९ ॥

---

परिग्रहप्रौढशिलावलम्बिनः, पतन्ति संसारमहाम्बुधौ जनाः ।
सन्तोषवज्रेण विभिद्य तां पुन–स्तरन्ति विद्यापतिवत्सुमेधसः ॥ १ ॥

पोतनाख्ये पुरे राजा, शूरः शूरपराक्रमैः । श्रेष्ठी विद्यापतिस्तस्य, भार्या श्रृङ्गारसुन्दरी ॥१॥ स्वप्ने तमेकदा लक्ष्मी–रुवाच दशमे दिने । अहं यास्यामि हे वत्स !, चिरात्त्वं मुत्कलाप्यसे ॥२॥ प्रबुद्धः सोऽपि भार्यायै, तं वृत्तान्तं न्यवेदयत् । लक्ष्मीनाशे कथं कार्य–मिति चिन्तातुरः पुनः ॥ ३ ॥ विशुद्धबुद्धिः साऽप्याह, यद्येवं सकलाऽपि सा । व्ययनीया सुपात्रादा–वन्यथाऽपि हि यास्यति ॥ ४ ॥ अथ व्ययितुमारेभे, स श्रेष्ठी सकलं धनम् । तथाऽपि वर्द्धते किन्तु, कूपोदकमिवाऽन्वहम् ॥ ५ ॥ यथा यथा व्ययस्तस्य, गेहे वृद्धिस्तथा तथा । दीयमानोऽपि भारत्याः, कोशः किं नाम हीयते? ॥ ६ ॥ जिनालये जिनेन्द्रस्य, पुरस्तात्तौ च दम्पती । परिग्रहव्रते मान–मेवं जगृहतुर्मिथः ॥ ७ ॥ त्रिः पूजा

द्भिः प्रतिक्रान्ति–र्भोजनं दानपूर्वकम् । वेषयोर्युग्ममेकैव, भार्या श्रृङ्गारसुन्दरी ॥ ८ ॥ मासे च विंशतिदिना–न्यावयोः शीलमुत्तमम् । कच्चोलं भाजनं चैकं, सौवर्णे ते उभे परम् ॥ ९ ॥ वासरे चैकशो भुक्तिः, पौषधः पर्ववासरे । चतुष्प्रकाराहारस्य, त्यागो रात्रौ च सर्वथा ॥ १० ॥ एकं च टङ्ककशतं, जीर्णनाणकसम्भवम् । मासयोग्यं गृहे धान्यं, नियमो द्विपदादिषु ॥११॥ सच्चित्तमेकं मुक्त्वाऽन्य–सचित्तनियमोऽस्तु नः । पूजोपकरणं सर्वं, मुत्कलं परमावयोः ॥१२॥ एवं सम्यक्त्वमूलानि, व्रतानि द्वादशाऽप्यमू । प्रतिपद्य गृहं गत्वा, व्ययतः स्म समां श्रियम् ॥१३॥ स विश्राणितसर्वस्वो, निश्चिन्तो दशमे दिने । रात्रौ सुप्तः श्रिया प्रोक्तः, स्थिताऽहं वत्स ! ते गृहे ॥ १४ ॥ त्वत्पुण्यदामभिर्बद्धा, काऽप्यहं गन्तुमक्षमा । उपस्थितोऽपि विघ्नस्ते, क्षीणः पुण्याऽनुभावतः ॥ १५ ॥ श्रृङ्खलासदृशं पुण्यं, मर्कटीसदृशा रमा । तया नियन्त्रिता सा हि, चञ्चलाऽपि क्व गच्छति ॥ १६ ॥ अथाऽन्यदिवसे श्रेष्ठी, कृत्वा तामपि पात्रसात् । त्यक्त्वा गृहमपि ज्ञाति–वर्गीयान्मुत्कलाय्य च ॥ १७ ॥ मौलौ करण्डिकां कृत्वा, जिनार्चायाः स धार्मिकः । नगरान्निर्ययौ पुण्य–समूहो मूर्त्तिमानिव ॥ १८ ॥ प्रतोलीं यावदायात–स्तावत्तत्पुरवासिनः । अपुत्रस्य क्षितिपते–रासीदाकस्मिकी मृतिः ॥ १९ ॥ इतश्च पञ्चदिव्यानि, सज्जितानि नियोगिभिः । साम्राज्यं च प्रदत्तं तै–स्तस्यैव श्रेष्ठिनस्तदा ॥ २० ॥ स प्राह नाहं राज्याऽर्हो–ऽभिषेकेन सृतं मम । तदा च दैवीवाग् जाता, तव भाग्यमहो ! महत् ॥ २१ ॥ मा कार्षीः प्रतिषेधं त–न्नाऽन्यथा भवितव्यता । श्रेष्ठ्यपि प्राह यद्येवं, तदा श्रृणुत मद्वचः ॥ २२ ॥ पूर्वं श्रीजिन-

विम्बस्य, कुरुध्वमभिषेचनम् । पश्चान्ममेति तेऽप्येव—मकार्षुर्हर्षपूरिताः ॥ २३ ॥ एवं च प्राप्तसाम्राज्यः, स श्रेष्ठी
सपरिच्छदः । नृपसौधमलञ्चक्रे, पुरस्कृतमङ्गलः ॥ २४ ॥ न्यस्य सिंहासने मुख्ये, जिनेन्द्रप्रतिमामसौ । स्वयं
तत्पादपीठस्थो, राजकार्याण्यसाधयत् ॥ २५ ॥ रत्नवृष्टिं तदा चक्रुः, सम्यग्दृष्टिसुरा वराः । एकछत्रं जिनस्यैव, स
राज्यं समसूत्रयत् ॥ २६ ॥ अकरोदकरं लोकं, धर्म्मकर्म्मणि कर्म्मठम् । सर्वत्राऽपि जिनाज्ञाऽभूत् , यथा राजा तथा
प्रजाः ॥ २७ ॥ स पञ्चशतसंख्यानि, जिनचैत्यान्यचीकरत् । स्वर्णरत्नमयीस्तेषु, प्रतिमाश्च न्यवीविशत् ॥२८॥ अख-
ण्डितस्वनियमो, जिनाज्ञामप्यखण्डयन् । अखण्डं स चिरं राज्यं, चकार जिननिश्रया ॥ २९ ॥ इति नियम्य परि-
ग्रहसागरं, स नृपतिः पदमव्ययमासवान् । कुरुत तेन परिग्रहनिग्रहं, सपदि यूयमपीच्छथ चेत् सुखम् ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे दशम उपदेशः ॥ १० ॥

---

जिनमतानुगतैः प्रतिषिध्यते, रजनिभोजनमन्त्यजनोचितम् । स्वपरसामयिकोक्तिविवर्जितं, तनुगुणं बहुदोषविशे-
षितम् ॥ १ ॥ योगशास्त्रोदितां रात्रे—र्भोजने दोषसन्ततिं । श्रुत्वा कस्तत्त्वविज्जन्तु—स्तत्र भोजनमाचरेत् ? ॥ २ ॥
रात्रिभुक्तेर्निश्चयस्या—ऽऽराधनेऽथ विराधने । मित्रत्रयस्य दृष्टान्तः, प्रोच्यमानो निशम्यताम् ॥ ३ ॥
क्काऽपि ग्रामे पुराऽभूवन्, सुहृदो वणिजस्त्रयः । श्रावको भद्रको मिथ्या—दृष्टिश्चेति क्रमादमी ॥१॥ जैनाचार्यान्तिके

ऽन्येद्यु-स्ते गता गुरुभिस्ततः । तत्पुरो देशना चक्रे, सुश्रावकजनोचिता ॥ २ ॥ तेषु श्राद्धः कन्दमूल-रात्रिभुक्त्यादिनिश्चयान् । सुखेन जगृहे श्राद्ध-कुलोत्पन्नतया रयात् ॥ ३ ॥ भद्रकस्तु बहूक्तोऽपि, रात्रिभोजननिश्चयम् । विमृश्य जगृहे नान्यं, मिथ्यादृष्टिर्न किञ्चन ॥ ४ ॥ श्राद्धभद्रकयोर्जाते, कुटुम्बे अपि धार्म्मिके । गृहव्यवस्था सर्वा हि, स्याद्गृहेशानुसारिणी ॥ ५ ॥ क्रमात्प्रमादबाहुल्यात्, श्रावको निजनिश्चये । तत्तत्कार्यव्यापृतत्वा-त्सञ्जातः शिथिलादरः ॥ ६ ॥ मध्ये त्याज्यघटीयुग्मं, भुङ्क्तेऽस्ते जातुचिद्रवौ । प्रातः सायमसौ जान-न्नप्यजानन्निवाऽभवत् ॥ ७ ॥ सम्यगाराधयामास, निश्चयं स्वं तु भद्रकः । कुटुम्बमपि सञ्जातं, श्राद्धस्य शिथिलं पुनः ॥ ८ ॥ राजकार्यादिवैयग्र्या-दन्यदोत्सूरसम्भवे । भद्रकः श्रावकश्चाऽपि, चिरेण गृहमागतौ ॥ ९ ॥ उत्सूरभवनाद्भुक्तिं, भद्रको नैव निर्ममे । आस्तिकस्तु तदाऽभुङ्क्त, कुटुम्बप्रेरणावशात् ॥ १० ॥ तदा तस्योपासकस्य, भुञ्जानस्याऽशनादिकम् । मस्तकात्पतिता यूका-ऽऽहारान्तस्तं च भुक्तवान् ॥ ११ ॥ ततो जलोदरव्याधि—बाधितोऽत्यन्तमाकुलः । विराध्य नियमं चैष, मृत्वा मार्जारकोऽभवत् ॥ १२ ॥ कदर्थ्यमानो दुष्टेन, शुना तत्र भवेऽपि सः । विपद्य नरके प्राच्ये, प्राप्तो दुःखानि सोढवान् ॥ १३ ॥ रात्रिभुक्तिप्रसक्तः स, मिथ्यात्व्यपि कदाचन । सविषाहारभुक्त्याभूत्, त्रुटदन्त्रः शनैः शनैः ॥१४॥ चिरान्मृतः पीड्यमान-स्तया निविडपीडया । मार्ज्जारो नारकश्चाद्ये, नरकेऽजनि मित्रवत् ॥ १५ ॥ भद्रकस्तु स्वनियमं, प्रतिपाल्य सुरोऽभवत् । सौधर्म्मे प्रौढिमांस्तेषां, भिन्नं भिन्नमहो ! फलम् ॥ १६ ॥ श्राद्धजीवस्ततः क्वाऽपि,

भोजननिश्चयः । तदेदानीगवे राज्ञः, शाम्यतादुदरव्यथा ॥ २९ ॥ इत्युक्तिपूर्वमुर्वीशं, स्वहस्तस्पर्शमात्रतः । क्षणादेव पटूचक्रे, सर्वपूर्जनसाक्षिकम् ॥ ३० ॥ श्रीपुञ्जाय तदा भूप–स्तुष्टः पञ्चशतीमितान् । ददौ ग्रामान् सोऽपि चक्रे, नृपादीन् जैनधार्मिकान् ॥ ३१ ॥ इत्थं श्रीपुञ्जविप्रः क्षितिपमुखजनार्च्यस्तदीयोऽनुजश्चा–ऽभूद्यो मिथ्यात्विजीवो जिनमतनिरतौ तौ कृताऽनेकधर्म्मौ । च्युत्वा काले स देवोऽप्यनुपमसुकृतैस्ते त्रयः सिद्धिमापुः, शर्वर्यां तेन भोज्यं परिहरत बुधाश्चेज्जिहासा भवस्य ॥ ३२ ॥

इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे एकादश उपदेशः ॥ ११ ॥

---

सामायिकं स्यात्समताविहीनं, निरर्थकं भव्यजनास्तदेतत् ।
आराध्यतां केसरिवद्भवद्भि–र्यथा समस्तानि सुखानि वः स्युः ॥ १ ॥

सामाइयं कुणंतो, समभावं सावओवि घडियदुगं । आउं सुरेसु बंधइ, इत्तियमेत्ताइं पलिआइं ॥ १ ॥ बाणंवइ-कोडीओ, लक्खांगुणसट्ठि सहसपणवीसं । नवसय पणवीसाए, सतिहा अडभाग पलिअस्स ॥ २ ॥ सामायिकं समतया, वियुक्तं यः समाचरेत् । करोति परमान्ने स, क्षारक्षेपं विमूढधीः ॥ ३ ॥

श्रीनिवासपुरे राजा, रिपुमर्दन इत्यभूत् । श्रेष्ठी समरसिंहाख्य–स्तत्र धर्म्मैककर्म्मठः ॥ १ ॥ तत्पुत्रः केसरीनामा,

प्रकृत्येर्ष्यालुरुद्धतः । व्यसनी दुर्विनीतश्च, कुलाङ्गार इवाऽभवत् ॥ २ ॥ अथ निष्काशितो गेहा—त्स पित्रा सर्वसाक्षि-
कम् । ततो निरङ्कुशश्चक्रे, स चौर्यं सर्वसद्मसु ॥ ३ ॥ इत्थं पुरान्तस्तन्वाने, स्तैन्ये तस्मिन्नृपोऽन्यदा । सभानिविष्टः
प्रोवाच, कोऽयं ? कस्य सुतोऽथवा ?॥ ४ ॥ तदा तत्र निविष्टस्त—त्तातः प्राह कृताञ्जलिः । दुष्पुत्रोऽयं मम स्वामिन् !,
मया निर्वासितो गृहात् ॥ ५ ॥ चौर्यं विना न भोक्तव्यं, मयेत्यस्याऽस्त्यभिग्रहः । एतद्विशेषसम्बन्धः, पुनरित्यव-
धार्यताम् ॥ ६ ॥ एकदाऽयं सरस्तीरे, स्थितो ध्यायति दुष्टधीः । यावत्तावन्नभोमार्गे, पादुके पदयोर्दधत् ॥ ७ ॥
योगी कोऽप्यागतस्तत्र, ते मुक्त्वा तत्र यावता । स्नानादि कुरुते ताव—त्ते लात्वैष खमुद्ययौ ॥ ८ ॥ तयोः प्रभा-
वादेकोऽपि, नैकतस्करकार्यकृत् । दुष्टरोग इवाऽसाध्यो, पुरस्याऽयं विभोऽभवत् ॥ ९ ॥ पुराधिष्ठातृदेव्यग्रे, वक्ति
चैवं स्तुतिं सृजन् । चौरिकार्द्धेन ते भोगं, करिष्येऽर्द्धं ममाऽस्तु च ॥ १० ॥ भाविनी सफला सा चे—त्प्रसादात्तव
देवि ! मे । अनुज्ञातस्तयाऽप्येष, सिद्धचौरस्ततोऽभवत् ॥ ११ ॥ भूपोऽथ लब्धतन्मर्म्मा, सारैः परिवृतो भटैः । देवी-
भवनमागत्य, प्रच्छन्नं स्थितवान् क्वचित् ॥ १२ ॥ तदा च तस्करोऽप्यागात्, तां देवीं जननीमिव । अर्चितुं पादुके पाणौ—
कृत्य कस्याऽप्यविश्वसन् ॥ १३ ॥ भूपतिः प्रकटीभूय, तमाक्रोशति यावता । पक्षिवत्तावदुड्डीनः, पादुके परिधाय
सः ॥ १४ ॥ याति यात्येष भोश्चौरः, इति भूपतिभाषिताः । कृतकोलाहलाः सर्वे, भटास्तमनुधाविताः ॥ १५ ॥
अभिग्रहस्य मे भङ्गो, नूनमद्य भविष्यति । यतो याति विना चौर्यं, दिनमद्यतनं मम ॥ १६ ॥ इत्यादि चिन्तयं-

श्चौरो–ऽप्यग्रे गच्छन्नधो भुवि । अपश्यन् ज्ञानिनं कञ्चि–द्वदन्तमिति पर्षदि ॥ १७ ॥ भो भोः प्राणिगणाः ! लब्ध्वा, मानुष्यं रत्नयोनिवत् । रत्नमेकं स्थिरीकार्यं, दुर्लभं द्रव्यकोटिभिः ॥ १८ ॥ ईदृग् रत्नं मयाऽद्याऽपि, चोरितं नास्ति किं कृतम् ? । इत्युत्कर्णोऽभवद्याव–त्तावन्मुनिरभाषत ॥ १९ ॥ एकं सामायिकं रत्नं, दुष्प्रापममरैरपि । रागद्वेषादिद-स्युभ्यो, रक्षणीयं प्रयत्नतः ॥ २० ॥ अन्तर्मुहूर्त्तं चित्तस्य, यत्साम्यं तन्निगद्यते । सामायिकं यत्र हेयाः, कषाया एव केवलम् ॥२१॥ न बाह्याऽऽडम्बरः कोऽपि, यस्य दानादिपुण्यवत् । तद्यथाऽवसरं कार्य–महोरात्रमुपासकैः ॥ २२ ॥ श्रुत्वेति केसरी चौर–स्तत्र सस्पृहतां दधत् । मनःसाक्षिकमातेने, व्रतं सामायिकाऽभिधम् ॥ २३ ॥ त्यक्तद्वेषो मनः-शुद्ध–भावेन मुनिभाषितम् । अनुष्ठानमयं चक्रे, नृपादेरपि निर्भयः ॥ २४ ॥

वावाराणं गुरुओ, मणवावारो जिणेहिं पन्नत्तो । जो नेइ सत्तमीए, अहवा मुक्खं पराणेइ ॥ १ ॥

तदा च लघुकर्म्मत्वा–त्तस्य केवलमुज्ज्वलम् । बभूव महिमानं च, चक्रुस्तस्य सुरेश्वराः ॥ २५ ॥ सहस्रपत्रसौवर्ण–कमले निषसाद सः । तदग्रे देशनां चक्रे, देवतादत्तवेषभृत् ॥ २६ ॥ अथ प्राप्तो नृपस्तत्र, तद्वृत्तं तादृशं पुनः । निरीक्ष्य विस्मितोऽत्यन्त–महो ! कर्म्मविचित्रता ॥ २७ ॥ केवली प्राह राजेन्द्र !, पश्य सामायिकव्रतम् । यस्य जातं क्षणा-र्द्धेऽपि, फलं लोकोत्तरं मम ॥ २८ ॥ एवं प्रबोध्य राजादीन्, लोप्त्रं सर्वं निवेद्य च । लोकोपकृतये चक्रे, विहारं

वसुधातले ॥ २९ ॥ एवं स केसरिमुनिः प्रतिबोध्य भूरि–कालं जनान् विदलिताऽखिलकर्मजालः । प्राप्तो यदुच्च-
पदवीं तदिदं फलं हि, सामायिकव्रतभवं विमृशन्तु सन्तः ? ॥ ३० ॥

इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे द्वादश उपदेशः ॥ १२ ॥

---

भव्यैः प्रतिक्रमणमादरणीयमेत–द्यत्पञ्चधा जिनवरैर्गदितं हितार्थम् ।
पापान्निवृत्तिरसकृत्सुकृते प्रवृत्ति–रित्थं बुधैर्यदभिधार्थ उदीरितश्च ॥ १ ॥

यदुक्तम्—

मिच्छत्तपडिक्कमणं, तहेव अस्संजमे पडिक्कमणं । कसायाण पडिक्कमणं, जोगाण य अप्पसत्थाणं ॥ १ ॥
संसारपडिक्कमणं, चउविहं होइ आणुपुव्वीए । तीए पच्चुप्पन्ने, अणागए चेव कालंमि ॥ २ ॥
स्वस्थानाद्यत्परस्थानं, प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः, प्रतिक्रमणमुच्यते ॥ ३ ॥
पापादीनां तदा भाव–प्रतिक्रमणमुच्यते ॥ ४ ॥ एकस्मिन्नपि यद्येते, स्युः प्रकाराः प्रतिक्रमे ।
प्रतिक्रमणमीदृक्षं, ये कुर्वन्ति दिने दिने । तेषामिहाऽप्यमुत्राऽपि, सुखं सज्जनवद्भवेत् ॥ ५ ॥
बाणवह्न्यर्क १२३५ संख्येये, वर्षे श्रीपत्तने पुरे । ग्रथिलो भीमदेवोऽभूत्, भूपतिर्भाग्यभासुरः ॥ १ ॥ वेश्या

सहस्रकलाख्या, तेन स्वान्तःपुरी कृता । राज्यराष्ट्रादिचिन्तां तु, कुरुते सैव भूपवत् ॥२॥ श्रीमालज्ञातिवांस्तत्र, सज्जनो दण्डनायकः । राज्येऽधिकारी सम्यक्त्व–द्वादशव्रतभूषितः ॥ ३ ॥ स जिनं पूजयित्वैव, भुङ्क्ते शेते विधाय च । प्रतिक्रान्तिमिदं तस्य, निश्चयद्वितयं दृढम् ॥ ४ ॥ अन्येद्युः पत्तने प्रासा, यवनानामनीकिनी । सबालवृद्धः सर्वोऽपि, लोकोऽभूद्भयविह्वलः ॥५॥ सज्जनेन समं देवी, सैन्यमादाय सम्मुखम् । गता सज्जीकृता चाशु, रणक्षेत्रस्य भूमिका ॥६॥ अश्वानां मानवानां च, जिन २४ दन्त ३२ प्रमास्तदा । सहस्रा अभवन्नष्टा–दशहस्तिशतानि च ॥ ७ ॥ गजाऽश्वशस्त्रसंनाहान्, सुभटानां पृथक् पृथक् । देव्यार्पयत्सज्जनं च, सेनानीत्वेऽध्यतिष्ठिपत् ॥ ८ ॥ ब्राह्मे मुहूर्त्तेऽध्यारूढः, सज्जनो द्विरदं स्वयम् । युद्धाय प्रगुणीचक्रे, समग्रानपि सैनिकान् ॥ ९ ॥ हस्तिकुम्भस्थ एवाऽसौ, स्थापयित्वाऽक्षमालिकाम् । प्रतिक्रमणमातेने–ऽवसरज्ञा हि तादृशाः ॥ १० ॥ पार्श्वस्थाश्चिन्तयन्त्येव–मेष किं योत्स्यति प्रभुः । धार्म्मिको ह्येष युद्धं तु, साध्यं निर्दयमानसैः ॥ ११ ॥ ततो द्विघटिके जाते, प्रतिक्रम्य समाधिना । सामायिकं पारयित्वा, सैन्यं सर्वमचालयत् ॥ १२ ॥ हस्तिस्थेनापि यत्नेन, प्रतिक्रान्तिस्तदा कृता । तत्सैन्यमिलनायैवा–ऽन्यथा तत् शिथिलीभवेत् ॥१३॥ प्रतिक्रमणवेलायाः, व्यतिपातोऽपि सम्भवी । एषोऽपि हेतुः सर्वं हि, कार्यं काले कृतं शुभम् ॥ १४ ॥ अथ युद्धं महज्जातं, सैन्ययोरुभयोरपि । गजाऽश्वरथपत्त्याद्याः, यथा स्वं स्वं ढुढौकिरे ॥ १५ ॥ सज्जनेन तदा युद्धं, तथा चक्रे यथा क्षणात् । समस्तं यवनानीकं, काकनाशं ननाश तत् ॥ १६ ॥ राज्जनस्य परं घाताः, दश लग्नास्तदा तनौ ।

उत्पाट्य नीतो देव्यग्रे, साऽप्येनं प्रत्यचीकरत् ॥ १७ ॥ दुकूलाञ्चलवातेन, तस्य वातमवीजयत् । आहूयच्च महावैद्यान्,
कृतास्तैश्च प्रतिक्रियाः ॥ १८ ॥ देव्यग्रे सुभटैरुक्तं, स्वामिन्यस्य किमुच्यते । रात्रौ 'एगिंदिया बेइन्दिआ' इत्याद्य-
मूचिवान् ॥ १९ ॥ प्रातर्युद्धं तथा चक्रे, यथा कोऽपि चकार न । देव्याह सज्जनं चक्रे, विरुद्धं किमिदं भवान् ? ॥२०॥
सोऽप्याह स्वामिनि ! स्वीयं, रात्रौ कार्यं कृतं मया । प्रातस्त्वदीयं येनेदं, तवाऽऽयत्तं वपुर्मम ॥ २१ ॥ ममायत्तं मन-
स्तेन, स्वकार्यं निर्मितं मया । श्रुत्वेति तं प्रशंसन्ति, धर्म्मे दार्ढ्यमहो ! कियद् ? ॥ २२ ॥ जगाम पत्तनं देवी, सज्जनोऽपि
पट्टकृतः । वैद्यैः क्रमेण श्रीधर्म्मं, राजकार्यं च स व्यधात् ॥ २३ ॥ सङ्कटे पतितेऽप्येवं, ये न मुञ्चन्ति निश्चयम् ।
तेषां हस्तगतैव स्यात्, निर्वाणसुखसन्ततिः ॥ २४ ॥ अन्यथा वा प्रतिक्रान्तिं, पञ्चधा ब्रुवते बुधाः । दिवारात्रौ
तथा पक्षे, चातुर्मास्यां च वत्सरे ॥ २५ ॥

सपडिक्कमणो धम्मो, पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं, कारणजाए पडिक्कमणं ॥१॥

समणेन सावएण य, अवस्सकायव्वयं हवइ जम्हा । अंतो अहो निसस्सा, तम्हा आवस्सयं नाम ॥ २ ॥

इत्थं प्रतिक्रमणमप्यनणुप्रमाद–मुत्सृज्य भव्यनिवहाः ! क्रियतां भवद्भिः । यस्मिन्कृतेऽथ भवभारवियुक् शरीरी,
भारप्रमुक्त इव भारवहो लघुः स्यात् ॥ २६ ॥

इति श्रीउपदेशसप्ततिकाया पञ्चमेऽधिकारे त्रयोदश उपदेशः ॥ १३ ॥

दानादिधर्म्मस्य विशेषपोषं, धत्ते ततः पौषधमाहुरार्याः । तं केऽपि धन्याः प्रतिपालयन्ति, यथा सुदत्तव्यवहारिधुर्यः ॥ १ ॥ सामाइयपोसहसु–ट्ठियस्सजीवस्स जाइ जो कालो । सो सफलो बोधव्वो, सेसो संसारफलहेऊ ॥ २ ॥

अभूत्सूर्ययशा राजा, पुरे कुसुमपूर्वके । मित्रानन्दस्तस्य मन्त्री, जिनधर्म्मोऽधिवासितः ॥ १ ॥ सभायामन्यदा जातो, विवादो नृपमन्त्रिणोः । प्रमाणं व्यवसायोऽत्र, किं पुण्यैरित्यवग् नृपः ॥ २ ॥ व्यवसायवतः सर्वं, फलदायि प्रजायते । नहि सुप्तमुखे क्वाऽपि, निपतन्ति फलादयः ॥ ३ ॥ मन्त्री तु प्राह पुण्यानि, प्रमाणं किमुपक्रमैः । अन्धक्रियावदफलै–र्यतः शास्त्रेऽपि पठ्यते ॥ ४ ॥

नैवाकृतिः फलति नैव कुलं न शीलं, विद्यापि नैव न च यत्नकृताऽपि सेवा ।
भाग्यानि पूर्वतपसा किल संचितानि, काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ १ ॥

नृपतिः प्राह यद्येवं, व्यापारं त्वं तदा त्यज । अधुनैव व्रज क्वाऽपि, न गन्तव्यं गृहेऽपि च ॥ ५ ॥ पुण्यं प्रमाणयन्मन्त्री, मुक्तसर्वपरिच्छदः । तदैव तैरेव पदै–र्निर्गतो नगराद्बहिः ॥ ६ ॥ गच्छंश्च सरसि क्वाऽपि, कृतस्नानस्तरोरधः । विश्रान्तः क्षणमैक्षिष्ट, तावदेकं वरं नरम् ॥ ७ ॥ नरः प्रोवाच हे मन्त्रिन्! अमुं वाञ्छितसिद्धिदम् । चिन्तामणिं गृहाण त्वं, प्रसीदानुगृहाण माम् ॥ ८ ॥ इत्युक्त्वा तं मणिं तस्य, समर्प्य स तिरोदधे । स्वस्वरूपमनुक्त्वैव, हृष्टोऽमात्यो भृशं ततः ॥ ९ ॥ दर्शयामीशितुः पुण्य–प्रभावमिति चिन्तयन् । अभ्यर्च्य तं मणिं सैन्यं, चतुरङ्गमयाचत

॥ १० ॥ तत्प्रभावोपसम्पन्न–चतुरङ्गचमूयुतः । स्वपुरे प्राहिणोद्दूतं, लेखहस्तं नृपान्तिके ॥ ११ ॥ दूतोऽप्युवाच
पुण्यसार–सैन्यो मन्त्री समागतः । विक्रमी यद्यसि क्ष्माप !, तत्प्रहर्तुं बहिर्भव ॥ १२ ॥ तं तादृशं चमूयोगं, श्रुत्वा
दूतनिवेदितम् । भूपः समग्रसभ्यानां, पुरस्तादिदमब्रवीत् ॥ १३ ॥ वरेण्यं पुण्यमेवात्र, भो भोः सभ्याः ! निभा-
ल्यताम् । एकाकी निर्गतोऽप्येष, प्राप्तः साम्प्रतमीदृशम् ॥ १४ ॥ नृपोऽथ सम्मुखं गत्वा, मानं मुक्त्वाऽभिषस्वजे ।
प्रमोदविस्मयोत्फुल्लः, पुरे प्रावेशयच्च तम् ॥ १५ ॥ तावुभावपि लोकानां, धर्मस्थैर्यं वितेनतुः । चतुर्ज्ञानधरस्तत्र,
सूरिरेकोऽन्यदाऽगमत् ॥ १६ ॥ वन्दितुं तं नृपामात्यौ, जग्मतुः सपरिच्छदौ । श्रुता च सावधानाभ्यां, ताभ्यां त-
द्धर्मदेशना ॥ १७ ॥ समये च नृपोऽप्राक्षीत्, भगवन्नस्य मन्त्रिणः । येन चिन्तामणिर्दत्तः, स कः? इत्यभिधीयताम्
॥ १८ ॥ गुरुः प्राह पुरा पुर्यां, पद्मायां श्रावकोत्तमः । श्रेष्ठी सुदत्तः सम्यक्त्व–द्वादशव्रतभूषितः ॥ १९ ॥ अहो–
रात्रिकमन्येद्युः, सोऽग्रहीत्पौषधव्रतम् । सुष्वाप विधिना रात्रौ, निद्राणो योगनिद्रया ॥ २० ॥ तदा च तद्गृहे चौरः,
प्रविष्टः कोऽपि निर्भयः । मुषित्वा गृहसर्वस्वं, निर्ययौ नीरपूरवत् ॥ २१ ॥ श्रेष्ठी तु जाग्रदेवाऽभूत्, तं जानन्नपि
नाऽनुदत् । अवद्यभीरुर्धर्मात्मा, व्रतातीचारशङ्कितः ॥ २२ ॥ अथ पारणकं चक्रे, प्रातः पारितपौषधः । पुत्रादेरपि
तं वृत्तं, स गभीरो न चाऽवदत् ॥ २३ ॥ स एव तस्करोऽन्येद्यु–र्हारं विक्रेतुमागतः । हट्टे क्वाऽपि सुदत्तस्य, पुत्रेण
ददृशे तदा ॥ २४ ॥ उपलक्ष्य निजं हार–मारक्षेभ्यस्तमार्पयत् । तेऽपि वध्यभुवं निन्यु–स्तं चौरं सर्वसाक्षिकम्

स

॥ २५ ॥ तं तथाऽवस्थितं श्रेष्ठी, दृष्ट्वा सदयमानसः । आरक्षानब्रवीदेवं, भो भोः ! मुञ्चत मुञ्चत ॥२६॥ मयैवाऽस्याऽर्पितो हारो, न विदन्ति सुतादयः । श्रेष्ठी नाऽसत्यवक्तेति, विमुक्तस्तैः स तस्करः ॥ २७ ॥ विजने श्रेष्ठिना शिक्षा, तस्य दत्तेति भोस्त्वया । नाऽकर्त्तव्ये मतिः कार्या, मानुष्यं दुर्लभं खलु ॥ २८ ॥ तस्करस्तस्य सौजन्य–मुपकारं च संस्मरन् । प्रव्रज्याऽनशनं कृत्वा, सौधर्म्मे त्रिदशोऽभवत् ॥ २९ ॥ सुचिरं निरतीचार–पौषधव्रतपालनात् । स श्रेष्ठी सचिवो जातो, धर्मवान् भाग्यभासुरः ॥ ३० ॥ देवेनाऽवधिना ज्ञात्वा, प्राग्भवोपकृतं तव । सङ्कटे पतितस्याशु, दत्तश्चिन्तामणिस्तदा ॥ ३१ ॥ अत्राऽन्तरे स देवोऽपि, तत्रैत्योवाच मन्त्रिणम् । किं ते करोमि? सोऽप्याह, यात्रां सर्वत्र कारय ॥ ३२ ॥ ततश्च तेन देवेन, सह नन्दीश्वरादिषु । यात्रां कृत्वा वलमानः, प्राप्तः स लवणोपरि ॥ ३३ ॥ तावद्विलीनकर्म्मत्वा–त्तस्य केवलमुज्वलम् । आयुःक्षयाद्विमुक्तिश्च, युगपत्समपद्यत ॥ ३४ ॥ इति पौषधव्रतेऽपि हि, दृष्टान्तः स्पष्टितो मया प्रकटः । तद्भो भव्या लोकाः !, तत्र रतिः किमिति न क्रियते ॥ ३५ ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे चतुर्दश उपदेशः ॥ १४ ॥

---

वित्तानि पात्रेषु वपन्तु हे जनाः !, भवाभिलापो यदि वो न विद्यते ।
तादृक्षमक्षूणमसारसम्पदां, फलं हि दानादपरं न विद्यते ॥ १ ॥

पुराऽवनिपुरे नाम्ना, प्रकृत्यापि च भद्रकः । अभूच्छ्रेष्ठी राजमान्यो, जायाऽप्येतत्सदृग्गुणा ॥ १ ॥ अन्यदा दम्पती तौ श्री-धर्म्मं श्रुत्वा गुरोर्मुखात् । तत्पार्श्वेऽभिग्रहान्कांश्चि-त्स्वीचक्रतुरक्रतिमान् ॥ २ ॥ त्रिः पूजां द्विः प्रतिक्रान्तिं, भुक्तिमेकान्तरां च सः । सुपात्रदानसच्चित्त-त्यागाद्यं प्रतिपन्नवान् ॥ ३ ॥ दयिताऽप्याददे सर्वं, तन्नमस्कृत्य तौ गुरून् । गृहे गतौ कियत्कालं, ताभ्यां धर्म्मश्च निर्म्ममे ॥ ४ ॥ अन्येद्युर्द्रविणं क्षीणं, तस्य प्राक्कर्म्मयोगतः । ततश्च वानरप्रायं, कोऽपि तं मन्यतेऽपि न ॥ ५ ॥ अथ भार्याऽऽह गच्छन्तु, भवन्तो मत्पितुर्गृहे । तत्र च द्रविणैराढ्याः, विद्यन्ते भ्रातरोऽपि मे ॥ ६ ॥ ते च तुभ्यं प्रदास्यन्ति, द्रव्यं कियदपि प्रभो ! । तेन त्वं व्यवसायादि, कारं कारं सुखीभव ॥ ७ ॥ इत्युक्तेऽप्यस्य नोत्साह-स्तत्र गन्तुं मनागपि । श्वशुरस्य गृहे यानं, सतां लज्जाकरं खलु ॥ ८ ॥ अतिप्रेरणया तस्याः, उपवासदिनेऽपि सः । चलितः सार्द्धमादाय, सक्तूनामेव शम्बलम् ॥ ९ ॥ द्वितीयदिवसे क्वाऽपि, प्रदेशे पारणेच्छया । प्रस्वेद्यपयसा सक्तू-श्चक्रे श्रीजिनपूजनम् ॥ १० ॥ तदा तद्भाग्ययोगेन, प्रेरितः कोऽपि संयतः । आगाद्दत्त्वा च तस्मै त-च्छेषं च बुभुजे स्वयम् ॥ ११ ॥ स तेन पात्रदानेन, प्रमोदं परमं वहन् । चतुर्थदिवसे ह्रीतः, इव तन्मन्दिरे ययौ ॥ १२ ॥ अथ सत्यापयन्ति स्म, स्वागतादि परं न ते । अत्यादरं तस्य चक्रुः, पश्यन्तस्तं धनोज्झितम् ॥ १३ ॥ तथापि स्वस्य निर्वाह-योग्यं याचितवान् कियत् । श्वशुराद्या अपि प्रोचु-स्तदा तस्येदृशं वचः ॥ १४ ॥ श्रेष्ठिन्न साम्प्रतं व्याजो, न वाणिज्यं च तादृशम् । भवादृशामदेयं किं, परं

युक्तिर्न तांदृशी ॥ १५ ॥ तथापि कुलदेवी चे–त्कथयिष्यति तद्धनम् । कियत्तवाऽर्पयिष्यामः, सा हि नः कामधेनुवत् ॥ १६ ॥ तैः पृष्टा साऽप्यवादीत्तान् यदेष पथि साम्प्रतम् । दानपुण्यं व्यधात्तस्य, षष्ठांशं चेद्ददाति वः ॥१७॥ सौवर्णिकानां षड्लक्षी, तदानीमस्य दीयताम् । श्रुत्वेति देवीवाक्यं तैः, तस्याग्रे तन्निवेदितम् ॥ १८ ॥ सोऽप्याह निजपुण्यस्य, न लेशमपि वो ददे । कोट्यंशेऽपि भवद्द्रव्यं, मम दानस्य नार्घति ॥ १९ ॥ ततः स सत्त्वमालम्ब्य, चचाल स्वपुरं प्रति । स्वपुराऽऽसन्ननद्यां च, क्रमादेत्य व्यचिन्तयत् ॥ २० ॥ अहो! मे जैनधर्म्मास्था, नित्यं तुष्टस्य किं धनैः । परं मदीया गृहिणी, करोत्यार्त्तिं करोमि किम् ?॥ २१ ॥ तत्र मां प्रेपितवती, या महद्भिर्मनोरथैः । सा दृष्ट्वेदृगवस्थं मां, मृतकल्पा भविष्यति ॥ २२ ॥ तदेतानुज्ज्वलान्वृत्तान्, गृहीत्वा कर्करानपि । ग्रन्थौ निबध्य गच्छामि- गृहे सा प्रीयते यथा ॥ २३ ॥ विमृश्येति महान्तं तत्, पोट्टलं न्यस्य मस्तके । आगतो मन्दिरे श्रेष्ठी, साऽपि संमुखमागमत् ॥ २४ ॥ वित्तेन पूरितो भर्त्ता, प्रास इत्युल्लसन्मुखी । उत्तार्य मस्तकाद्ग्रन्थिं, मुमोच क्वाऽपि कोणके ॥ २५ ॥ पूजासत्पात्रदानादि–धर्म्ममाहात्म्ययोगतः । अथ ते कर्कराः सर्वे, जात्यरत्नानि जज्ञिरे ॥ २६ ॥ तन्मध्यादेकरत्नेन, स्वभर्त्तुरपरेऽहनि । सम्मील्य शस्यवस्तूनि, प्राज्यं भोज्यं व्यधत्त सा ॥ २७ ॥ रत्नस्वरूपमप्राक्षी–द्भोजनावसरे पतिम् । किमेतदिति सम्भ्रान्तः, स्ववृत्तं सोऽप्यभाषत ॥ २८ ॥ श्रीधर्म्मस्यैव माहात्म्यं, तन्नूनमिदमावयोः । इति तौ दम्पती धर्म्मे, चक्रतुर्निश्चलं मनः ॥ २९ ॥ इत्थमेष पुनरद्भुतसम्प–त्प्रासितोऽजनि नृपादिषु मान्यः । पात्रदानजिनपूजन-

मुख्यं, पुण्यमेव भविकाः ! क्रियतां तत् ॥ ३० ॥

॥ इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे पञ्चदश उपदेशः ॥ १५ ॥

---

गुणानुरागं गुणवज्जनेषु, साधर्म्मिकाणां सृजतां विधेयम् ।
वात्सल्यमुत्फुल्लधियाऽऽस्तिकौघैः, श्रीदण्डवीर्येण यथा कृतं तत् ॥ १ ॥

वंशे श्रीभरतस्यासीत्, अयोध्यायां महीपतिः । अष्टमो दण्डवीर्याख्य–स्तेजसां यशसां निधिः ॥ १ ॥ आचारं भरतेशस्य, श्राद्धभोजनलक्षणम् । स सत्यापयति प्रोच्चै–स्त्रिखण्डावनिमण्डनम् ॥ २ ॥ स षोडशसहस्रेषु, राजसु स्फीतभक्तिषु । निषण्णेष्वन्यदाऽऽस्थान्या–मलञ्चक्रे वरासनम् ॥ ३ ॥ गतेष्वथ च षट्कोटि–पूर्वेषु भरतादनु । सौधर्म्मेन्द्रः सभासीनः, सस्मार भगवद्गुणान् ॥ ४ ॥ तुष्टाव च स तं तादृक्, पुंरत्नश्रेयमीशितुः । वंशं शाखाशतैर्युक्तं, जगदाऽऽलम्बनक्षमम् ॥ ५ ॥ वर्यवीर्यं दण्डवीर्यं, गृणन्तं धर्म्ममार्हतम् । सौधर्मेन्द्रः सभासीनो, ददर्श ज्ञानचक्षुषा ॥६॥ श्राद्धवेषं सुरेशोऽथ, कृत्वाऽयोध्यामुपागमत् । उदस्य पाणिं भूपाय, स आशीर्वचनं जगौ ॥ ७ ॥ गृणन्तं चतुरो वेदान्, भरतेशेन निर्मितान् । दृष्टिपूते पथि न्यस्त–चरणं ब्रह्मधारिणम् ॥ ८ ॥ द्वादशव्रतधारित्वात्, तावन्ति तिलकान्यपि । बिभ्राणं हृदये हेम–सूत्रत्रयविराजितम् ॥ ९ ॥ तं वीक्ष्य दण्डवीर्योऽभू–त्तस्मिन् सादरमानसः । क्रियाया

डम्बरो यावां—स्तावांल्लोकादरोऽपि यत् ॥ १० ॥ कुतः समागतोऽसि त्वं?, यियासा कुत्र वा तव? । इति भाषिणि भूपाले, मायया सोऽप्युवाच तम् ॥ ११ ॥ अहं श्रीअमरावत्या, पुरीतः श्राद्धवेषभृत् । तीर्थेषु यात्रा कुर्वाणः, प्रासोऽद्याऽत्र नराधिप ! ॥ १२ ॥ अत्र शक्रावताराख्ये, चैत्ये श्रीऋषभप्रभुम् । स्तुत्वा भवन्तं दृष्ट्वा च, मयात्माऽयं पवित्रितः ॥ १३ ॥ आज्ञापयदथो सूदां—स्तद्भोजनकृते नृपः । अद्य तीर्थोपवासस्य, चिकीर्षास्तीति सोऽप्यवक् ॥ १४ ॥ क्षपणस्य निषेधे तु, भूपालाद्यैः कृते सति । स प्रासो दानशालासु, दृष्टिपूतं चरन् पथि ॥ १५ ॥ पठतस्तत्र शास्त्राणि, वेदादीनि कृतोद्यमम् । कांश्चिद्ध्यानपरान्कांश्चि—त्कांश्चिदाचारशिक्षकान् ॥ १६ ॥ त्रिकालदेवपूजायै, त्रिशुध्या स्नानिनः परान् । क्रमात्संक्रन्दनः श्राद्धान्, वीक्ष्याऽऽप परमां मुदम् ॥ १७ ॥ श्राद्धाभिवादये तुभ्य—मिति वादिभिरुत्थितैः । आचम्य शुचिभिस्तोयै—स्तैः समं सोऽविशद्गृहम् ॥ १८ ॥ कोटिश्राद्धकृते जात—मन्नपाकं क्षणादपि । दिव्यप्रभावादेकोऽपि, सोऽभुङ्क्त कपटाऽऽस्तिकः ॥ १९ ॥ परिवेषयतान्नं रे!, बुभुक्षा व्याकुलस्य मे । कथं सूदाः ! दण्डवीर्यो, व्रीडापात्रं विधीयते? ॥ २० ॥ तत्स्वरूपे चरै राज्ञे, ज्ञापिते स्वयमेत्य सः । अपश्यत् क्षामकुक्षिं त—मिव मासोपवासिनम् ॥ २१ ॥ मायाश्राद्धोऽपि राजेन्द्रं, दृष्ट्वा श्रद्धासमन्वितम् । जगाद कठिनां वाचं, दीनभावं प्रकाशयन् ॥ २२ ॥ राजन्नमी त्वया सूदाः, नियुक्ताः श्राद्धवञ्चने । माममप्येकं क्षुधाक्षामं, यदमी प्रीणयन्ति न ॥ २३ ॥ तच्छ्रुत्वा कुपितः किञ्चि—दपाचयदिलापतिः । शतमूढकमानेन, सूदैरन्नं स्वदृक्पुरः ॥ २४ ॥ मायया स क्षणादेव,

पश्यतो नृपतेस्तदा । जग्रसेऽन्नं यथा वह्निः, सर्वमिन्धनसञ्चयम् ॥ २५ ॥ मायाश्राद्धः पुनः प्राह, जातेन भवताऽपि किम्? । पूर्वेषां यः कुलं कीर्त्तिं, पुण्यं नाऽधिकतां नयेत् ॥ २६ ॥ श्राद्धभोजनरूपां त्वं, मायां मुञ्च त्रपां त्यज । प्रतार्यन्ते कथं मर्त्त्याः, सत्राडम्बरधारिणा? ॥ २७ ॥ तस्येति निष्ठुरां वाचं, श्रुत्वाऽपि न चुकोप सः । स्वपुण्याऽपूर्णतां जानन्, प्रत्युत स्वं निनिन्द सः ॥ २८ ॥ ज्ञात्वाऽथ नृपतेर्भावं, जगौ मन्त्री पवित्रवाक् । स्वामिन्नयं श्राद्धरूप-श्छलकृत्कोऽपि निर्ज्जरः ॥ २९ ॥ श्राद्धवेपेऽस्ति ते भक्ति-र्यदि तत्तां समाचर । चन्दनागुरुकर्पूर-कस्तूरीप्रमुखां नृप ! ॥ ३० ॥ श्रुत्वेति भूपतिर्धूपं, चन्दनागुरुमिश्रितम् । ददाह तत्पुरो भक्त्या, पुण्यं वाक्यं जगाद च ॥ ३१ ॥ कस्त्वं श्रावकवेपेणे-हागान्मां पावितुं वद । कुर्वन्मयि कृपां देव !, प्रसीद प्रकटीभव ॥ ३२ ॥ पुरुहूतस्ततो रूपं, प्रकटीकृत्य तं जगौ । धन्यस्त्वमेव यस्येदृग्, भक्तिः साधर्म्मिके जने ॥ ३३ ॥ दृश्यन्ते कोटिशो विश्वे, स्वोदरंभरयो नराः । साधर्म्मिकस्यैकस्याऽपि, न तु वात्सल्यकारकाः ॥ ३४ ॥ निर्म्माय निर्म्मायतया प्रशंसां, शक्रस्तदीयामिति रत्नकोटीः । प्रवृष्य दिव्यं च धनुः प्रदाय, स्वां राजधानीं समलञ्चकार ॥ ३५ ॥ श्रीदण्डवीर्योऽपि विधाय यात्रां, शत्रुञ्जये सङ्घपतेः पदं च । प्राप्यात्मदर्शोदितकेवलश्रीः, क्रमाच्च निर्वाणपुरे जगाम ॥ ३६ ॥

इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे पोडश उपदेशः ॥ १६ ॥

श्रीज्ञानसाधारणवित्तमास्तिकैः, सङ्घानुमत्या न पुनर्निजेच्छया ।

व्यापार्यमत्राऽपि जिनागमोदितं, श्राद्धद्वयोदाहरणं निगद्यते ॥ १ ॥

भोगपुरे नगरे २४ कनककोटिस्वामी धनावहश्रेष्ठी । तस्य पत्नी धनवती तयोर्युग्मजातौ सुतौ कर्म्मसारपुण्यसारौ, पित्राऽन्यदा कीदृशावेतौ भाविनाविति नैमित्तिकः पृष्टः, स प्राह, कर्म्मसारो जडप्रकृतिरतिनिष्प्रज्ञो विपरीतबुद्धितया सुबहूपक्रमेऽपि प्राच्यद्रव्यनिर्गमनव्यद्रव्योपार्ज्जनाभावादिना बहुकालं दारिद्र्यादिदुःखवान् भावी । पुण्यसारोऽपि प्राच्यद्रव्यस्य नवोपार्ज्जितस्य च पुनः पुनर्हान्या तथैव दुःखी भावी, परं वाणिज्यादिकलाकुशलौ द्वावपि भाविनौ, द्वयोश्च वार्द्धके धनसौख्यसन्तत्यादि भावि। क्रमेणोपाध्यायस्य पाठनायार्पितौ । पुण्यसारः सुखेन सर्वा विद्या अधीतवान् । कर्म्मसारस्य तु अक्षरमपि नायाति । वाचनलिखनाद्यपि कर्त्तुं न शक्नोति पशुप्रायः । पाठकेनाऽपि पाठनं मुक्तम् । यौवनस्थौ च तौ पितृभ्यां महेभ्यकन्ये परिणायितौ सोत्सवम् । मा मिथः कलहो भावीति द्वावपि १ २।१२ कनककोटिर्दत्वा पृथक्कृतौ । पितरौ तु प्रव्रज्य स्वर्ग्गतौ अथ कर्म्मसारस्य निजतत्तत्कुबुद्धया स्वजनादिनिषेधनेऽपि वाणिज्यादिविदधतो यत्र तत्र विनाशस्यैव सम्भवात् द्वादशाऽपि स्वर्णकोटयो गताः । पुण्यसारस्यापि राजदायादतस्करवह्न्याद्युपद्रवैः स्तोकेनापि कालेन सर्वा अपि स्वर्णकोटयो गताः । जातौ द्वावपि दरिद्रौ । त्यक्तौ स्वजनादिभिः । भार्ये अपि क्षुधार्दिते गते पितृगृहे । यतः—

अलियंपि जणो धणवं—तयस्स सयणत्तणं पयासेइ । आसन्नवंधवेणवि, लज्जिज्जइ हीणविहवेण ॥ १ ॥

गुणवंपि निग्गुणच्चिय, गणिज्जए परियणेण गयविहवो । दक्खन्नाइ गुणेहिं, अलिएहिवि गिज्जए सधणो ॥२॥

ततो निर्बुद्धिनिर्भाग्याविति लोकैर्दत्ताभिधानौ पदे पदे प्राप्ताऽपमानौ लज्जितौ गतौ देशान्तरम् । स्थितौ च पृथक् पृथक् क्वाऽपि महेभ्यगृहे अन्योपायाभावाद्भृत्यवृत्त्या । यस्य च गृहे कर्म्मसारः स्थितः सोऽलीकव्यवहारी कृपणश्चेति उक्तमपि वेतनं न दत्ते असुकदिने दास्यामीति वचसैव तं विप्रतारयति । ततो बहुभिरपि दिनैस्तेन किमपि नार्जितम् । द्वितीयेन तु कियदर्ज्जितमपि प्रयत्नगोपितमपि धूर्त्तेनापहृतम् । एवमन्यान्यस्थानेषु भृत्यवृत्त्या धातुर्वादसत्यवादसिद्धपुरुषरसायनरोहणाद्रिगमनमन्त्रसाधनरुदन्त्याद्यौषधिग्रहणादिना एकादशकृत्वोऽर्ज्जितमपि धनं कुबुद्धिप्रमादादिना निर्भाग्यतया च निर्गमितम् । ततोऽत्युद्विग्नौ पोतमारुह्य रत्नद्वीपं गतौ, द्वीपाधिष्ठायिकदेव्यग्रे मृत्युमप्यङ्गीकृत्य निविष्टौ । अष्टमे उपवासे नास्ति भाग्यं युवयोरिति कथने कर्म्मसार उत्थितः । पुण्यसारस्य त्वेकविंशत्युपवासैर्दत्तं तया चिन्तारत्नं । कर्म्मसारः पश्चात्तापं कुर्वन् पुण्यसारेणोक्तः । बन्धो ! मा विषीद, अनेन चिन्तारत्नेन आवां द्वावपि सुखिनौ भाविनाविति विमृश्य हृष्टौ निवर्त्तमानौ पोतमारूढौ । रात्रौ च राकाशशाङ्कोदये वृद्धेनोक्तम्, भ्रातः ! स्फुटीकुरु चिन्तारत्नं विलोक्यते, तस्य चन्द्रस्य वाऽधिकं तेजस्ततो लघुनाऽपि पोततटस्थेन दुर्दैवप्रेरितेन हस्ते नीत्वा क्षणं रत्ने क्षणं चन्द्रे दृष्टिं निदधता कल्लोलादिषु व्यग्रचित्ततया पातितं रत्नं रत्नाकरान्तः । ततो द्वावपि समदुःखौ स्वपुरं च प्राप्तौ दुःखेन कालं गमयतः ।

अथान्यदा पुरे तत्र, केवली कश्चिदाययौ । आगत्य तं मुनिं नत्वा, ताभ्यां पृष्टं च तत्पुरः ॥ १ ॥ भगवन्! कर्म्मणा केना-ऽस्माकं दुःखावलीदृशी । अपि वर्षशतैर्यस्याः, पारो नायाति वर्णने ॥ २ ॥ ज्ञानी प्राह पुरा चन्द्र-पुरेऽभूतां महर्द्धिकौ । जिनदत्तो जिनदासः, श्रावकौ परमार्हतौ ॥ ३ ॥ ज्ञानसाधारणद्रव्यं, मीलयित्वाऽन्यदास्तिकैः । सुस्थानत्वेन रक्षायै, तयोरेवाऽर्प्पितं क्रमात् ॥ ४ ॥ आत्मजीवितवत्ताभ्यां, विज्ञाभ्यां जिनशासने । तद्द्रव्यरक्षाचिन्तादि, चिरकालं व्यधीयत ॥ ५ ॥ जिनदत्तोऽन्यदाऽऽत्मीय-पुस्तिकायामलेखयत् । विलोक्यमानमाकुट्या, किञ्चिल्लेखकपार्श्वतः ॥ ६ ॥ इदमप्यस्ति हि ज्ञान-स्थानमेवं विचारयन् । स्वपार्श्वे चाऽपरद्रव्या-ऽभावाल्लेखयितुस्तदा ॥ ७ ॥ अर्प्पयामासिवानेप, निर्विचारो निजेच्छया । सहसा द्वादशद्रम्मा-नादाय ज्ञानवित्ततः ॥ ८ ॥ युग्मम् ॥ द्रव्यं साधारणं सङ्घ-योग्यमेवं विदन्नपि । अहमप्यस्मि तन्मध्ये, मनसीति विभावयन् ॥ ९ ॥ जिनदासोऽपि मौग्ध्येन, तत्सत्कानेव तन्मितान् । द्रम्मान् व्यापारयामास, क्वचिदात्मप्रयोजने ॥ १० ॥ युग्मम् ॥ शास्त्रज्ञावपि तावेवं, विवेकविधिवर्ज्जितौ । अनालोचिततत्पापौ, प्रथमं नरकं गतौ ॥ ११ ॥ यदुक्तं वेदान्तिनापि—

प्रभास्वे मा मतिं कुर्यात्, प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति, प्रभादग्धाः पुनर्नहि ॥ १ ॥
प्रभास्वं ब्रह्महत्या च, दरिद्रस्य च यद्धनम् । गुरुपत्नी देवद्रव्यं, स्वर्ग्गस्थमपि पातयेत् ॥ २ ॥

ततस्तौ पन्नगौ तस्मा-न्नरकेष्वखिलेष्वपि । उत्पन्नौ पूरयित्वान्त-र्भवान्मत्स्यादियोनिषु ॥ १२ ॥ तिर्यग्जातिषु

सर्वासु, तौ भ्रान्तौ तेन कर्म्मणा । अङ्गच्छेदादिकां प्रायः, सहमानौ कदर्थनाम् ॥ १३ ॥ चतुस्त्रिकसहस्राणि, भवानेवं प्रपूर्य तौ । यथाप्रवृत्तकरणा-च्छुभकर्म्मोदयोन्मुखौ ॥ १४ ॥ व्यवहारिकुलेऽमुष्मिन्, युवां जातौ सहोदरौ । विडम्बयति कं नैषा, दुर्लङ्घ्या भवितव्यता ? ॥ १५ ॥ स्वेच्छादिः पणितद्रम्म-व्यापारार्जितकर्म्मणा । द्विःषड्भवसहस्राणि, दुःखाली युवयोरियम् ॥ १६ ॥ चतुस्त्रिकस्वर्णकोट्योः, प्रत्येकं पितृदत्तयोः । भवऽत्र यदभून्नाशो-ऽपमानश्च पदे पदे ॥ १७ ॥ यच्च नव्यधनालाभः, ग्रासार्थस्यापि न स्थितिः । फलं तस्यैव दुष्कर्म्म-विपद्रोः कटुकं छदः ॥१८॥ यत्पुनः कर्म्मसारस्य, जडताद्यत्र जन्मनि । तत्प्राग्भवकृतज्ञान-द्रव्यव्यापारजं फलम् ॥ १९ ॥ ज्ञानद्रव्यं यतोऽकल्प्यं, देवद्रव्यवदुच्यते । साधारणमपि द्रव्यं, कल्पते सङ्घसम्मतम् ॥ २० ॥ श्रीसङ्घेनापि तद्द्रव्यं, सप्तक्षेत्र्यां जिनाज्ञया । व्ययनीयं न देयं तु, मार्गणादौ यथा तथा ॥ २१ ॥ यतः—

एकत्रैव स्थानके देववित्तं, क्षेत्रद्वय्यामेव तु ज्ञानरिक्थम् ।
सप्तक्षेत्र्यां स्थापनीयं तृतीयं, श्रीसिद्धान्ते जैन एवं ब्रवीति ॥ १ ॥

जातु ज्ञानादिसम्बन्धि-द्रव्यभोगो भवेत्तदा । तत्पदे निजवित्तानि, देयानि द्विगुणान्यपि ॥ २२ ॥ इति श्रुत्वा श्राद्धधर्म्म-प्रतिपत्तिपुरस्सरम् । प्रायश्चित्तपदे ताभ्या-मेवं चाऽग्राहि निश्चयः ॥ २३ ॥ वाणिज्यमध्ये यो लाभो, भावी स्तोकोऽथवा बहुः । ज्ञानसाधारणद्रव्य-पदेऽस्तु निखिलोऽपि सः ॥ २४ ॥ स्युः सहस्रगुणा याव-द्द्रम्मा

द्वादश ते मुने ! । प्रतिपद्येति नत्वा च, तं स्वमन्दिरमागतौ ॥ २५ ॥ कियत्यपि गते काले, क्षीणे चाऽशुभकर्म्मणि । प्रायश्चित्तपदप्रोक्त–समस्तद्रविणार्प्पणे ॥ २६ ॥ प्राग्वत्तयोरजायन्त, द्वादशस्वर्णकोटयः । ततो मूर्द्धन्यतां प्राप्तौ, समग्रव्यवहारिषु ॥२७॥ ज्ञानसाधारणद्रव्यो–त्सर्प्पणैकपरायणौ । तौ जन्माऽवधि जैनाज्ञा–मखण्डामारराधतुः ॥ २८ ॥ प्रान्ते तपस्यामादाय, प्रौढोत्सवपुरस्सरम् । चिरं चारित्रमाराध्य, क्रमाच्च सुगतिं गतौ ॥२९॥ एवं देवज्ञानसाधारणादि–द्रव्यं व्यक्त्या स्थापनीयं सुयुक्त्या । व्यापार्यं च श्रावकैस्तत्त्वविज्ञैः, निर्लेपत्वं स्यात्तथा चिन्तनीयम् ॥३०॥

इति श्रीउपदेशसप्ततिकायां पञ्चमेऽधिकारे सप्तदश उपदेशः ॥ १७ ॥

इति श्रीपरमगुरुतपागच्छनायकश्रीसोमसुन्दरसूरिक्रमकमलमरालमहोपाध्यायश्रीचारित्ररत्नगणितद्विनेयपण्डितश्रीसोमधर्मगणिविरचितायां श्रीउपदेशसप्ततौ पञ्चमोऽधिकारः ॥ समाप्ता चेयं श्रीउपदेशसप्ततिका ॥

---

## ॥ अथ प्रशस्तिः ॥

जाग्रद्भाग्यजुषां क्षमारसपुषां संविग्नचारित्रिणां, चातुर्विद्यविनोदिनां च समभूत् पङ्क्तिर्यदीया धुरि । यैश्चाऽर्हन्मतकानने कलियुगेऽप्युन्मादवादिद्विपा–ऽहङ्कारप्रसरं निरस्य विदधे पञ्चाननस्फूर्जितम् ॥ १ ॥ तपागच्छाधिराजाः श्री–सोमसुन्दरसूरयः । श्रीचन्द्रकुलशृङ्गारा, न केषां ते प्रमोददाः ॥ २ ॥ युग्मम् ॥ कृतशान्तिकरस्तोत्राः, नृपादिप्रति-

॥ ३ ॥ सम्मतिप्रमुखाऽनेक–विपमग्रन्थभाणकाः । श्रेयो दि-
बोधकाः । जितप्रवादा भान्ति श्री–मुनिसुन्दरसूरयः ॥ ३ ॥ सम्मतिप्रमुखाऽनेक–विपमग्रन्थभाणकाः । श्रेयो दि-
शन्तु सङ्घाय, जयचन्द्रगुरूत्तमाः ॥ ४ ॥ दक्षिणदेशविहारे, निर्दलितोद्धतकुवादिवृन्दमदाः । श्रीभुवनसुन्दराह्वाः, सूरि-
वरास्ते मुदं ददतु ॥ ५ ॥ एकादशाङ्गीसूत्रार्थो–दधिमन्दरभूधराः । जिनसुन्दरसूरीन्द्राः, न केपां हर्पहेतवः ॥ ६ ॥
जिनकीर्त्तिसूरिराजाः, गुरुगच्छहितोद्यता रताः सुकृते । संविग्नसाधुधुर्याः, जयन्तु सूत्रार्थसार्थभृतः ॥ ७ ॥ जगदाह्लाद-
कवचसो, विशालराजा जयन्तु सूरिवराः । दग्धेऽपि वपुपि येपां, न भस्मसाच्चोलपट्टोऽभूत् ॥ ८ ॥ नव्यानेकसदु-
क्तियुक्तिसरसैर्ग्रन्थैर्गरीयस्तरैः, स्वोपज्ञैरमृतह्रदैरिव जगत्तापाऽपहारक्षमाः । धौरेया उपकारकर्मणि सदा जाग्रत्प्रतापो-
दयाः, येऽम्भोदा इव जैनशासनवनं प्रोत्फुल्लमातन्वते ॥ ९ ॥ गच्छाधिपत्यपदवीमुपभुञ्जते ते, श्रीरत्नशेखरगुरुप्रवरा
इदानीम् । शास्त्रोक्तसूरिगुणसम्पदमादधानाः, सम्यक् स्वशिष्यगणशिक्षणसावधानाः ॥ १० ॥ श्रीउदयनन्दिपादाः,
सदा प्रसन्ना भवन्तु सङ्घाय । लोकोत्तरा यदीया, निरीहता दृश्यतेऽद्याऽपि ॥ ११ ॥ उल्लङ्घ्याऽन्यसतीर्थ्यो, गुरुप्रसा-
दोऽधिकोऽभवद्येपु । ते श्रीलक्ष्मीसागर–सूरिवराः सन्तु वः सिद्ध्यै ॥ १२ ॥ तुर्येऽपि युगे येपां, श्रीवज्रस्वामिवत्सु-
सौभाग्यम् । श्रीसोमदेवसूरि–प्रवरास्ते सन्तु वो जयदाः ॥ १३ ॥ अन्येऽपि सूरिवाचक–विबुधाः स्थविरा जयन्तु
साधुगणाः । जीवप्रदेशसंख्याः, गुणा यदीया विनयमुख्याः ॥ १४ ॥ येपां बुद्धिरनुत्तराऽतिविपमग्रन्थार्थसाक्षात्कृतिम्,
चेतःसद्मनि दीपिकेव सृजती प्रोज्जागरा सर्वदा । सर्वेपामुपयोगिनी समभवद्दानप्रदीपस्तथा, ग्रन्थो यद्विहितश्छिनत्ति

कृतिनामद्याऽपि दुष्टं तमः ॥ १५ ॥ जयन्तु ते वाचकपुङ्गवाः श्री—चारित्ररत्ना गुरवो मदीयाः । यद्भाणिता वर्यविनेयवाराः, कुर्वन्त्यनेका उपकारकोटीः ॥ १६ ॥ तद्भ्रातरः सकलकोविदमाननीयाः, पूज्या जयन्त्युदयशेखरपण्डितेन्द्राः । जह्रे ममाऽपि जडिमा हृदयप्ररूढा, भास्वद्भिरात्मशुचिगोभिरनुत्तरा यैः ॥ १७ ॥ तयोः पदाम्भोरुहचञ्चरीकः, शिष्योऽभवत् पण्डितसोमधर्म्मः । शास्त्राणि भूयांस्यपि यो बभाण, मर्म्माणि तेषां न विवेद किन्तु ॥ १८ ॥ उपदेशसप्ततिरियं, रुचिरा गुणविन्दुबाणचन्द्रमिते १५०३ । वर्षे तेन ग्रथिता, कृतार्थनीयाऽपि बुधधुर्यैः ॥ १९ ॥ एषाऽलिपिकाऽपि निजहस्तगपुस्तिकान्तः, स्थाप्याऽन्यपुस्तकगता न कदाऽपि कार्या । सैव प्रपा नगरमध्यगता वरेण्या, यस्यां जनः पिबति वारि यथा निजेच्छम् ॥ २० ॥ विशुद्धबुद्धिर्जिनसोमसंयतः, कलिन्दिकायां कुशलो विनिर्ममे । सदोषपोषामपि मुक्तदूपणां, सतीमिवैतामुपदेशसप्ततिम् ॥ २१ ॥ यावद्वीरजिनेन्द्रशासनमिदं दुर्वादिनिर्नाशनं, यावन्मेरुमहीधरप्रभृतयो भावा अमी शाश्वताः । श्रीसङ्घश्च चतुर्विधोऽपि कुरुते यावच्च पुण्योद्यमम्, तावत् श्रीउपदेशसप्ततिरियं श्रेयस्करी स्तात्सताम् ॥ २२ ॥

॥ इति श्रीउपदेशसप्ततिः पण्डितश्रीसोमधर्म्मगणिकृता अष्टमासीयथावसरव्याख्यानार्हाः ॥

